श्रीगणेशाय नमः ॥ भवानीगणनाथंचनत्त्वाब्रह्मादिदेवताः । बालानांचसुबोधायकुर्वेहं लघुसंग्रहम् ॥ १ ॥ आदौनक्षत्रनामानि अश्विनी भरणी कृत्तिका रोहिणी मृगशिरा आर्द्रा पुनर्वसु पुष्य आश्लेषा मघा पूर्वाफाल्गुनी उत्तराफाल्गुनी हस्त चित्रा स्वाती विशाखा अनुराधा ज्येष्ठा मूल पूर्वाषाढा उत्तराषाढा अभिजित् श्रवण धनिष्ठा शतभिषा पूर्वाभाद्रपद उत्तराभाद्रपदा रेवती इति नक्षत्र नामानि । चुचेचोला अश्विनी लिलुलेलो भरणी अइउए कृत्तिका ओवाविवु रोहिणी वेवोकाकि मृगशिरा कुघङछ आर्द्रा केकोहहि पुनर्वसु हुहेहोडा पुष्य डिडुडेडो आश्लेषा मामिमुमे मघा मोटाटिटु पूर्वाफाल्गुनी टेटोपापि उत्तराफाल्गुनी पुषणठ हस्त पेपोरारि चित्रा रुरेरोता स्वाती तितुतेतो विशाखा ननिनुने अनुराधा नोयायियु ज्येष्ठा येयोभाभि मूल भुधाफाढा पूर्वाषाढा भेभोजजि उत्तराषाढा जुजेजोखा अभिजित् खिखुखेखो श्रवण गागिगुगे धनिष्ठा गोसासिसु शतभिषा सेसोदादि पूर्वाभाद्रपदा दुथझञ उत्तराभाद्र-

पदा देदोत्रचिरेवती ॥ अश्वनीभरणीकृत्तिकापादमेकं मेषः १ कृत्तिकापादत्रयरोहिणीमृगशिराऽर्द्धंवृषः २ मृगशिराऽर्द्धं आर्द्रापुनर्वसुपादत्रयंमिथुनः ३ पुनर्वसुपादमेकंपुष्याश्लेषान्तेकर्कः ४ मघाचपूर्वाफाल्गुनीउत्तरापादमेकंसिंहः ५ उत्तरापादत्रयं हस्तचित्रार्द्धंकन्या ६ चित्रार्द्धंस्वाती विशाखापादत्रयंतुला ७ विशाखापादमेकंअनुराधाज्येष्ठा वृश्चिकः ८ मूलंचपूर्वाषाढाउत्तराषाढापादमेकंधनुः ९ उत्तराषाढापादत्रयंश्रवणधनिष्ठार्द्धंमकरः १० धनिष्ठार्द्धंशतभिषापूर्वाभाद्रपादात्रयंकुम्भः ११ पूर्वाभाद्रपादमेकंउत्तराभाद्रपदारेवत्यंतंचमीनः १२ इति होडाचक्रम् ॥ अथ योगनामानि । विष्कुम्भः प्रीतिः आयुष्मान् सौभाग्यः शोभनः अतिगण्ड· सुकर्मा धृतिःशूलः गण्डः वृद्धिः ध्रुवः व्याघातः हर्षणः वज्रः सिद्धिःव्यतीपातः वारियानः परिघः शिवःसिद्धिः साध्यः शुभः शुक्लः ब्रह्मः ऐंद्र· वैधृतिः इतियोगनामानि ॥ द्वितीयाधनमीनेषु चतुर्थी वृषकुम्भयोः । मेषकर्कटयोः षष्ठी कन्यामिथुनयोरष्टमी ॥ १ ॥ दशमीवृश्चिकेसिंहे द्वादशी मकरे

तुले । एताश्चतिथयोदग्धाः शुभेकर्मणिवर्जिताः ॥२॥ नन्दा भद्राजयारिक्ताः पूर्णाश्चतिथयः क्रमात् । वारत्रयंसमावर्त्य तिथयः प्रतिपन्मुखाः ॥ ३ ॥ नन्दाङ्गारेसितेभद्रा सोमेचाविजया तथा । गुरौरिक्ताशनौपूर्णा कालयोगाः प्रकीर्तिताः ॥ ४ ॥ द्वादशीरविनायुक्ता सोमेचैकादशीतथा । दशमीभौमवारेणा नवमीबुधसंयुता ॥ ५ ॥ अष्टमीगुरुणायोगे सप्तमीभृगुसंयुता । षष्ठीशनैश्चरेणापि योगाश्चैतेचनिन्दिताः ॥६॥ श्रीपातिः । त्यजरविमनुराधंवैश्वदेवंचसोमे शतभिषमपि भौमेचन्द्रपुत्रेश्विनीच । शशधरमपिजीवे सार्प्यदेवंचशुक्रे रविसुतमपिहस्तेमृत्युयोगा भवन्ति ॥ ७ ॥ मघार्कवारेशशिनिद्विदेवं आर्द्राकुजेसोमसुतेचमूलम् । गुरौधनिष्ठाभृगुरोहिणीचशनौचहस्तायमघण्टयोग· ॥ ८ ॥ वर्जयेत्सर्वकार्य्येषुहस्तार्कंपञ्चमीतिथौ । भौमाश्विनीचसप्तम्यांषष्ठ्यांचन्द्रै-द्वंतथा ॥ १० ॥ बुधानुराधेचाष्टम्यांदशम्यांभृगुरेवती । नवम्यांगुरुपुष्यञ्चैकादश्यांशनिरोहिणी ॥११॥ गृहप्रवेशेयात्रायां विवाहेचयथाक्रमम् । भौमाश्विनीशनौब्रा

हंगुरौपुष्यंविवर्जयेत् ॥ १२ ॥ कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः । हुणवङ्ग
खशेष्वेववर्ज्यास्तृतयजास्तथा ॥ १३ ॥ मृत्यु ककचदग्धादीनिन्दोशस्तेशुभान्जगुः । केचिद्या
म्योत्तरंचान्येयात्रायामेवनिन्दितान् ॥ १४ ॥ ग्रन्थान्तरे । वैधृतिंचव्यतीपातंपरिघार्द्धतथैवच ।
व्याघातेनवनाड्यस्तुवर्ज्यास्सकलकर्मसु ॥१५॥ विष्कुम्भेघटिकास्तिस्रः शूलेपञ्चप्रकीर्तिताः।
वर्जेचनवनाड्यश्च पद्चगण्डातिगण्डयोः ॥१६॥अथार्द्धयामः। रवौवर्ज्यंचतुष्कंचसोमेसप्तद्वयं
तथा। कुजेषष्ठद्वयंचैवबुधेपञ्चतृतीयकम् ॥ १७ ॥ गुरौसप्ताष्टकंचैव शुक्रेवेदतृतीयकम्। शनावा
द्यन्तषष्ठंचवारवेलातिनिन्दिता ॥ १८॥ इत्यर्द्धयामः। वारादितोगतघटीद्विघ्नापञ्चहृतोप्तकम्
लब्धसैकन्दिनाधीशादर्क्कशुक्रज्ञचन्द्रमा ॥१९॥ शौरिजविकुजाश्चैव कालहोराधिपास्मृताः।
कालहोरासुतत्कार्य्यं यत्प्रोक्तंवासरेस्वके ॥ २० ॥ वर्षांतेवर्जयेत्पक्षमासान्तेचादिनत्रयम्। घटि
काद्वयमृक्षान्ते गृहणाद्दिनसप्तकम् ॥ २१ ॥ विपाशैरावतीतीरेशतद्रुयाश्चत्रिपुष्करे। वर्जयेत्स

र्वकार्य्येषु होलिकाप्राग्दिनाष्टकम् ॥ २२ ॥ अथगण्डान्ताः। तत्रवाशिष्टः। अश्विनीमघामूला
दौ गण्डोदण्डद्वयंतथा। रेवतीसर्पशक्रान्ते गण्डोदण्डद्वयेमतः ॥ २३ ॥ ग्रन्थान्तरे।अश्वि·
नीमघमूलादौत्रि ३ वेद ४ नव ९ नाडिकाः रेवतीसर्पशक्रान्ते मास १२ रुद्र ११ रसा ६
स्तथा ॥२४॥ मूलादौवेदघटिकाजायतेयदिमानवः। समाष्टकंपितातस्यमुखंनैवविलोकयेत् २५।
सर्वेषांगण्डजातानां परित्यागोविधीयते । तातेनादर्शनंकार्य्यं यावत्षाण्मासिकोभवेत् ॥२६॥
अथवाविधानतः शान्तिः कर्त्तव्याशुभमिच्छता। विवाहादिशुभेनेष्टा कर्त्तव्योविघ्नकारकः॥२७॥
अथशान्तिविधिः संक्षेपत.। शतौषधीमूलंमृदम्बुरत्नैस्सद्बीजगर्भैः कलशैः समंत्रैः। कुर्य्या
ज्जनित्रीसहबालकानां स्नानंशुभार्थीसहहोमदानैः ॥२८॥ शतौषध्याअलाभेचसर्वौषधिगणः
स्मृतः। कुष्ठमांसिहरिद्रेद्वेमुराशैलेयचन्दनम्। वचाचम्पकमुस्ताचसर्वौषध्योदशस्मृता ॥२९॥
सप्तमृत्तिका। गजस्थानाद्धयस्थानात्तथाचैवचतुष्पथात्। वल्मीकस्थान्नदीसङ्गाद्राजद्वाराच्च

गोष्ठतः ॥ ३० ॥ अपरमन्यतो ऽवगम्य शान्तिकर्म विधेयमत्रग्रंथविस्तरभयान्नलिखितम् । यतोबालानांग्रन्थविस्तारोदुस्तर । अथविष्टिः । कृष्णेतृतीयादशमीचरात्रौस्यात्सप्तमीभूतदिवाचभद्रा ॥ ३१ ॥ अथभद्रामुखम् । दशम्यामष्टम्यांप्रथमघटिका पञ्चकपरं हरद्युः सप्तम्यां द्विदशघटिकान्तेत्रिघटिकम् । तृतीयाराकायांखयमघटिकाभ्यः परभवं शुभंविष्टेःपुच्छं शिवातिथिचतुर्थ्योस्तुविरमे ॥ ३२ ॥ अथभद्रापुच्छम् । भेष्वर्कनखनाड्यूर्ध्वंभद्रापुच्छंघटीत्रयम् क्रमेणैवसितेपक्षेउत्क्रमेणासितेतरे ॥३३॥अथभद्रावासः । कुम्भमीनालिसिंहेऽजे विष्टिर्वासामेहीतले। मेषादित्रितयं कर्के स्वर्गलोकेमहीतले॥३४॥कन्यातुलामृगेचापेपातालेयत्रतत्फलम्॥इति संक्षेपतस्त्याज्यकरणम्। अथकश्चिच्छुभयोगउच्यते।तत्रादौ।सूर्येऽर्कमूलोत्तरपुष्यदास्रं चन्द्रेश्रुतिब्राह्मशशीज्यमैत्रम् । भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पंज्ञेब्राह्ममैत्रार्ककृशानुचान्द्रम् ३५ जीवेन्त्यमैत्राश्व्यदितीज्यधिष्ण्यंशुक्रेन्त्यमैत्राश्व्यदितिश्रवोभम्।शनौश्रुतिब्राह्मसमीरभानिसर्वार्थसिद्ध्ये-

कथितानिपूर्वैः।३६। सूर्य्यभाद्वेद४गो९तर्क६दिग्१०विश्व१३नख२०संमिते चन्द्रर्क्षैर्वियोगाःस्युर्दो

| कृष्ण | | | | | | | | | शुक्ल |
|---|---|---|---|---|---|---|---|---|---|
| गतत् घटिकाद्वम् गतत्घटिमितभद्रा मुख गतत्घटिकाद्वम् गतत्मितभद्रा पुच्छम् । | ३ | ० | ५५ | १४ | ४ | ११ | ८ | ४५ | गतत्घटि परिमित भद्रापुच्छम् । |
| | ५८॥ | १ | ३७॥ | ० | ३० | ५८॥ | ७॥ | २८ | |
| | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | |
| | ५८। | १२ | ३४॥ | २७ | ५९ | ४५ | ४५ | १९॥ | |
| | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | |

षसंघविनाशकाः॥३७॥ श्रीपतिः। नन्दा शुक्रे सोमपुत्रेचभद्रा रिक्तामन्देलोहिता ङ्गजयाच । वाचस्पत्योयाचपूर्णाभिधा नासर्वारम्भेष्वेवसिद्धा तिथिःस्यात् ॥

॥३८॥ राम.। अयोगेसुयोगोऽपिचेत्स्यात्तदानीमयोगंनिहत्यैषसिद्धिंतनोति। परेलमशुद्धयाकुयो गादिनाशंदिनार्द्धोत्तरंविष्टिपूर्वंचशस्तम् ॥ ३९ ॥ विष्टिरङ्गारकश्चैवव्यतीपातःसवैधृतिः । प्रत्यरिर्जन्मनक्षत्रंमध्याह्नात्परतः शुभम् ॥ ४० ॥ इतिशुभयोगः। अथ संक्रान्तिगोचरमक रणम् ॥ पूर्वतोऽपिपरतोऽविसंक्रमात्पुण्यकालघटिकाश्चषोडश । अर्द्धरात्रिसमयादनन्तरंसंक्र

मंपरदिनेहिपुण्यदम् ॥ ४१ ॥ कार्मुकंचपरित्यज्यमकरंयातिभास्करः । प्रदोषेनार्द्धरात्रेवात
दापुण्यंपरेहनि ॥ ४२ ॥ यद्यर्द्धरात्रिरेवस्यात्सम्पूर्णा· संक्रमोरवे· । तदादिनद्वयंपुण्यंस्नानदा
नादिकर्मसु ॥४३॥ देवव्दयं २ क ९ तत्वोष्टाष्टौ ८८ नाड्योङ्का ९ स्तनृपाः १६० क्रमात् । वर्ज्याः
संक्रमणेऽर्कादेः प्रायोर्कस्यातिनिन्दिता· ॥ ४४ ॥ संक्रान्त्यधरनक्षत्राद्गणयेच्चात्र३ षट्३त्रि३
षट् ६ । पन्थाभोगोव्यथावस्त्रहानिश्चविपुलंधनम् ॥४५॥ अन्योद्वितीयः । यस्मिन् भेभातिच
न्द्रः करकलिततिथौदृश्यमानः प्रदोषेदेयन्तंमध्यशृङ्गेफलमिहकथितंजन्मनक्षत्रयोगात् । त्रा
संवित्तस्यलाभंभयमपिकथितंभूपसन्मानताञ्चस्थानत्यागंच लाभंभगणितगणक्रमक्षयाद्वितीयम् ॥ ४६ ॥ अथ ग्रहाणांगोचरफलम् । तत्रश्रीपतिः । सर्वेलाभं ११ गृहस्थितास्त्रि ३ ख १०
रिपुष्वर्कः कुजार्किस्त्रि ३ षट् ६ प्राप्ता त्र्या ३ द्य १ ख १० मन्मथा ७ रिपु ६ शशीखा १०
स्ता ७ रि ६ वर्जोभृगुः ९ धी ५ धर्मा ९ स्त ७ धनेषु २ वाक्पतिररिः ६ स्वा २ द्या ८ न्मु ४

ख १०स्थोबुधः श्रेष्ठोजन्मगृहादिगोचरविधौविद्धोनचेत्स्याद्ग्रहेः॥४॥ धेनुःशङ्खोरुचिरवृषभोकां
चनंपीतवस्त्रंश्वेतश्चाश्वसुरभिरासिताकृष्णालौहमहाजः। सूर्यादीनांमुनिभिरुदि १ तादात्तिणास्तु
ग्रहाणांस्नानैर्दानैर्हवनबलिभिस्त्वत्रतुष्यन्तिखेटा ॥ ४७॥ अपरं ग्रहणवर्णापेक्षयादानंदेयंसूर्य
भौमप्रीतयेरक्तवस्तुनिदेयानि बुधगुरुप्रीतयेपीतवस्तुदेयं चन्द्रशुक्रप्रीतयेश्वेतवस्तूनिदेयानिश
निराहुकेतुप्रीतयेकृष्णवस्तूनिदेयानि ॥ ४८ ॥ अथ स्नानविधिः। लाजाकुष्टबलाप्रियंगु
घनासिद्धार्थैः निशादारुभिः। पुंखालोध्रयुतैर्जलैर्निगदितं स्नानग्रहोत्थाघहृत् ॥ ४९ ॥
अथ ताराबलम्। जन्मभाद्गणयेदादौ दिनधिष्णावधिक्रमात्। नवभिस्तुहरेद्भागंशेषंताराप्रकी
र्तिताः५०।जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधकोवध। तथातिमैत्र्यमित्रंचतारानामसदृक्फलम्। १
कृष्णोबलवतीताराशुक्लेचन्द्रोबलीस्मृत ४।सूर्ययुक्ताच्चनक्षत्रादेयुपातोविधीयतेः मघा १९श्ले
षाच ९ चित्राच १४ सानुराधा १७ तथैवच ॥ ५१ ॥ श्रवणरेवतीचैवगणयेदश्विभादितः।

पातसंज्ञेचनक्षत्रेविवाहादिशुभंत्यजेत् ॥५२॥ अथमुहूर्त्तं । तत्रश्रीपतिः । रौद्राहिमित्रपितरोवसु वारिविश्वेवेधाविधिः शतमख पुरुहूतवन्हिः॥नक्तञ्चराश्ववरुणार्यमयानेयश्चप्रोक्तादिनेषुदशपंच तथा मुहूर्त्ता ॥३॥ निशामुहूर्त्तागिरिशाजपादाऽहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचन्द्रादिति जीवविष्णुतिग्मद्युतित्वाष्ट्र समीरणाश्च ॥ ५४ ॥ अर्यम्णार्केतुहिनकिरणोराक्षसब्राह्मसंज्ञोपित्र्यामे योक्षितिसुत दिनेचन्द्रपुत्रेऽभिजिच्च । पित्र्याब्राह्मोभृगुसुतदिनेसार्प्परक्षश्च जीवेभौजङ्गौशौसवितृ तनयेवर्जनीयोमुहूर्त्तौ ॥ ५६ ॥ आभिजिन्मुहूर्त्तेदक्षिणादिग्गमनंवर्ज्यम् मुहूर्त्तेसर्वस्मिन् दिक् शूलादिचिन्त्यम् ॥५७॥मन्देन्दूत्यजेत्पूर्वे गुरुवारेश्चदक्षिणे । पश्चिमेभृगुभानूच्चकुसौम्या त थोत्तरे ॥५८॥ आग्नेय्यांसोमगुर्वोश्चनैर्ऋत्यांरवि भार्गवौ । वायव्यांमङ्गलंचैव ऐशान्यांबुध- मन्दयो· ॥ ५९ ॥ इतिसंक्रान्तिगोचरताराबलोपग्रहमुहूर्त्तप्रकरणम् । अथनक्षत्रदेवताः । अश्वो १ यमो २ नलो ३ ब्रह्मा ४ चन्द्रो ५ रुद्रो ६ दिति ७ गुरुः । ८ सर्प्प ९ पितृ१०

भगश्चैव ११ अर्य्यमा च १२ दिवाकरः॥१३ त्वष्टा १४ वायु १५ कृशान्विन्द्रौ १६ मित्रश्चैव १७ पुरन्दर १८ निर्ऋति १९ सलिलंचैव २० विश्वेदेवो २१ जनार्दनः ॥२२ वसवो २३ वरुणश्चैव २४ तथैवस्यादजैकपात् २५ अहिर्बुध्न्य २६ स्तथापूषा २७ क्रमान्नक्षत्रदेवताः ॥६०॥ अथकृष्यारम्भः दैवज्ञचिन्तामणौ । रेवत्याश्विकरत्रयेमृगमघामूलानुराधोत्तराज्येष्ठावासवरोहिणीषुहरिभे पुष्येविशाखासुच । आदित्येशतभेचसौम्यदिवसेव्यङ्गेवृषेवृश्चिके बीजानांवपनंहलप्रवहणंछेदादिकंशोभनम् ॥६१॥ दशम्येकादशीचैवतृतीयाचत्रयोदशी । सप्तमीपञ्चमीचैवप्रतिपच्चसुखावहा ॥६२॥ रिक्ताष्टमीविष्टिषुनष्टचन्द्रेक्षीणेन्दुसूर्य्यार्कजभौमघस्रे । सिरंशकेवानिशिसन्ध्ययोर्वाकृताकृषिः पूर्वधनानिहन्ति ॥ ६३ ॥ भाद्रत्रयेशिरः प्राच्यांयाम्यांमार्गत्रयेशिर । फाल्गुनेत्रितयेपश्चाच्छिरोज्येष्ठात्रयोत्तरे ॥ ६४ ॥ ऊर्ध्वभागत्रयंत्यक्त्वाअधोभागद्वयंतथा । मध्येनाभिंविजानीयादितिप्राहपराशरः॥ ६५ ॥ यत्रनाभिस्तत्रहलबीजोप्तिःकर्त्तव्या । रामरामाग्निप-

श्वामिपंचाप्तिचशुभाशुभम्। अर्काज्झिताच्चनच शाल्लाङ्गलंचक्रमीरितम्॥६६॥ इतिहलचक्रम्
अथ वीजोप्तिः। राहुभद्रष्टकंयावद् द्वादशंषोडशंतथा। विंशान्मितेतथा चान्त्येवेदसंख्यास्त्यजे
त्बुधः॥इतिविजोप्तिचक्रम्॥सोमसोम्यगुरुशुक्रव।रासराःसर्वकर्मसुभवन्तिसिद्धिदा।भानुभौमश
निवासरेषुचप्रोक्तमेवखलुकर्मसिद्धयति ॥ ६८ ॥ अथ वस्त्रपरिधानंनवान्नंच ॥ रेवत्यांकरपंच
का।श्विवसुभेवस्त्रंबुधादित्रये पुंसांपुष्यपुनर्वसूसृतरसुरोहिरायापिश्रेयसी। एतेष्वेवनवान्नमत्रचमृ
गोविष्णोश्चभंशस्यतेचंद्रार्कावपिमीनगोयुतिभिः सार्द्धंतथामन्मथम् ॥ ६९॥ हस्ताश्विपुष्य
मृगवासवरोहिणीषुचित्रो त्तरानिऋृतिमित्रविशाखभेषुपूष्णासु पादपविधि शुभदोनराणांवारेषु
चन्द्रबुधभार्गववाक्पतीनाम्॥७०॥ द्व्यगस्थिरेतनौचापिशुभेः केन्द्रत्रिकोणगेः। पापैस्त्रिषट्द
शायस्थैः वृक्षाद्यारोपणंहितम्। अथनृपदर्शनं॥ चित्रोत्तरावैष्णवधातृपूषापुष्य श्रविष्ठाश्विमृ
गानुराधा। शुभाश्चतारातिथिवारयोगमहीपतीनांशुभदर्शनंस्यात्॥७१॥ अथमद्यारम्भः।मद्या

वरुणापूर्वासुमूलार्द्राभरणीषुच । पौरहूतेचसार्पेचमद्यारम्भः शुभावहः ॥७२॥ अथपशुनांक्रविक्रयः । वातद्वयेत्वादिति भद्वयेचवसुद्वयेपौष्ययुगेचसौम्ये । शाक्रेचमूलेपितृभेशुभेऽह्निकुर्य्यात्पशूनां क्रयविक्रयंच ॥७३॥ क्रयर्क्षेविक्रयोनेष्टेविक्रयर्क्षेक्रयोपिन । पौष्णाम्बुपाश्विनीवात श्रवश्चित्राक्रयेशुभाः ॥७४॥ अथविपणिः । कुम्भराशिमपहायसाधुषुद्रव्य २ कर्म १ भव ११ मूर्ति १ वर्तिषु । व्ययेषु १२ शुभदायिशुयमेभार्गवेविपणिरन्दसंयुतेः ॥७५॥ अथगजाश्वदोलादिकर्मयशोधरः । हस्तत्रयेत्वैत्यरिपुत्रयेचपुष्याश्विजीवादितिचन्द्रभेषु । ज्ञशुक्रचन्द्रार्कबृहस्पतीनांदोलभवाजीन्द्रविधिः प्रशस्तः ७६ रिक्तावर्जिततिथिषु । अथशस्त्रधारणम् । दैवज्ञचिन्तामणौ ॥ दास्रस्वातिचतुष्टयेऽदितियुगेचित्रोत्तराप्रुषभेरोहिण्यांगुरुभार्गवार्कदिवसेयोगेतिथौशोभने । लग्नेगोघटसिंहरंध्रभवनेशुद्धेविधौशोभनेसन्नाहादिसमस्तशस्त्रनिचयाराज्ञाहिताधारिताः ॥७७॥ अथवापीकूपतडागादिखननम् ॥ तत्र रामः । मित्रार्कध्रुववासवांबुपमघातोयान्त्यपुष्येन्दुभिः पापैर्हीनबलैस्तनौसुरगुरौज्ञेवाम्बगेखावि

धो । कार्य्यंसर्वंजलाश्रयस्यखननं व्यंभौमघैस्से-द्रभैस्तैर्नृत्यंहिवुकेशुभैस्तनुगृहेश्र्जेज्ञराशौशुभम्
॥ ७८ ॥ ग्रन्थांतरे० प्रद्योतनात्पंचनगाङ्कसूर्य्यनवेन्दुषड्विंशमितेषुभेषु । श्रुतेमहेनैवगृहांविधेयं
तडागवापीखननंप्रशस्तम् ॥ ७९ ॥ अथसेवाकर्मग्रन्थांतरे । रोहिण्युत्तरपौष्णोपुष्यसुवासवाश्वायो
रपि । सेवयेत्स्वामिनंमृत्यश्शुभवारादृगेतिथौ ॥ ८० ॥ स्ववर्गांष्टगुणं कृत्वापरवर्गेण योजयेत् ।
वसभिश्चहरेद्भागंयोधिकः सोऋणीभवेत् ॥८१ ॥ अ ८ क ५ च ६ ट ४ त ७ प १ य ३ श२
वर्गाःखगेशमार्जारसिंहश्वनाम् । सर्पाखुमृगीवानानिजपंचमवैरिणामष्टौ ८२ अथनौकाघट्टनंचा
लनञ्च दैवज्ञचिन्तामणौ । त्रिपुत्तरासरोहिण्यांमृगपुष्पेकरेवसौ । मैत्राहिवारुणेपित्र्योपोतकर्माणि
भेस्मृतम् ॥ ८३ ॥ शुक्रगुरोभौमवारेषु । अथचौराभिचारौ ॥ मूलार्द्राभरणीपित्र्यमृगेसौम्ये
घटेतनौ । सुखेशुक्रेऽष्टमेशुद्धेसिद्धिराभिचारयोः ॥ ८४ ॥ अथ रोगविमुक्तस्नानम् । ग्रामनृ
णामथांकयोज्यस्वर्गांकएकीकृत्यहरेत् गजैरिततोख्याता दशांकोभवेत् भूयस्वामीसमांकएव

शुभदोत्यांज्योत्यदुःखप्रद ॥ ८५ ॥ अःत्रयशोधरः । पूर्वासजीवशिववन्हिहरित्रयेषुमूलाश्वि
वार्द्धकीद्विदैवतमित्रभेषु ॥ वारेच भूमितनयार्कजवाक्पतीनां स्नानंशुभंभवतिरोगविमुक्तका
नाम् ॥ ८६ ॥ अन्यच्च ॥ लग्नेचरे सूर्यकुजेचचोररिक्तातिथौचन्द्रबलेनहीने ॥ केन्द्रात्रि
कोणेषुभवन्तिपापैः स्नानहितंरोगविमुक्तकानाम् ॥ अथ कोशसंग्रहः । तत्रनृसिंहः ॥ रौद्र
श्रवणपुष्येन्दुमैत्रवासववारुणम् ॥ त्रीण्युत्तराणिहस्तश्चकोशसंग्रहणेशुभाः ॥ ८७ ॥ अथा
रामजलाशयसुरप्रतिष्ठा ॥ जलाशयारामसुरप्रतिष्ठासौम्यायने जीवशशांकशुक्रे । दृश्येमृदुक्षि
प्रचरेध्रुवः स्यात्पक्षेसितस्वर्क्षतिथिक्षणेवा ॥ ८८ ॥ रिक्तारवर्जेदिवसेतिशस्ता शशांकपापै
स्त्रिभवाङ्गसंस्थैः ॥ व्यष्टांत्यगैः सत्खचरैर्मृगेन्द्रेसुर्ये घटेकोयुवतौचविष्णुः ॥ ८९ ॥ शिवोनृयु
ग्येद्वितनौचदेव्यः क्षुद्राश्चरेसर्वइमेस्थरर्क्षे ॥ पुष्येग्रहाविघ्नपसर्पयक्षभूतादयोन्त्ये श्रवणेजि
नश्च ॥ ९० ॥ अथनवपर्णफलाद्यशनम् । चण्डेश्वरः मूलाश्विमैत्रकरपुष्यहरीन्द्रभेषु पौष्णो

त्तरात्रयपुनर्वसुवासवेषु ॥ वारेषुभूमितनयार्कजवर्जितेषुताम्बूलनूतनफलाद्यशनंहितंस्यात् ।
॥ ११ ॥ अथद्रव्यप्रयोगः । तंत्ररामः । स्वात्यादित्यमृदुद्विदैवगुरुभेकर्णत्रयाश्वेचरे लग्नेधर्म
सुताष्टशुद्धिसहितेद्रव्यःप्रयोगःशुभः ॥ नारेभ्राद्यमृणंतुसंक्रमदिने वृद्धौकरेऽर्कान्हिये तद्वंशेषु
भवेदृणनं चबुधेदंयकदाचिद्धनम् ॥ १२ ॥ अथस्वर्णादिधारणम् ॥ ॥ रेवत्यां वासवेदास्त्रेतथाह
स्तादिपंचके ॥ नारीणांतुयशुक्रार्कगुरौस्वर्णादिधारणम् ॥ १३ ॥ अथभैषज्यकर्म ॥ हस्ता
शिवपुष्यगुरुवासवमूलमैत्र चित्रादितीन्दुहरिवारुणवायुभेषु ॥ वारेषुसूर्यबुधभार्गववाक्पतीनां
भैषज्यभक्षणविधिः शुभदोनराणाम् ॥ १४ ॥ अथसूचीकर्म । वासवेज्यादितित्वाष्ट्रमैत्रमैन्दवम
श्विनी ॥ सूचीकर्मतनुत्राणमेभिर्ऋक्षैः प्रशस्यते ॥ १५ ॥ श्रीपतिः ॥ वासवोत्तरदलाद्विपंच
केयाम्यादिग्गमनंगेहगोपनम् । प्रेतदाहतृणकाष्ठसंग्रहः शय्यकावितननंचवर्जयेत् ॥ १६ ॥ अथ
नक्षत्रताराज्ञानमाह ॥ तत्ररामः ॥ त्रि ३ त्र्यं ३ ग ६ पंचा ५ ग्नि ३ कुवेद ४ वह्नयः ३

शरेषु ५ नेत्राश्वि २ शरे ५ न्दु १ भू १ कृताः ४॥ वेदा ४ ग्नि ३ रुद्रा ११ शिवयमा २ ग्नि ३ वह्नयो ३ ब्ध यः ४ शतं १०० द्वि २ द्वि २ रदा ३२ भतारकाः ॥ १७ ॥ अश्वादिरूपंतुरगास्ययोनिक्षुरोनएणास्वमणिगृहंच । पृषत्कचक्रेभवनं च मंचशय्याकरोमौक्तिकविद्रमंच ॥ १८ ॥ तोरणंबालिनिभंचकुण्डलंसिंहपुच्छगजदंतमंचकाः । त्र्यस्त्रिचत्रिचरणाभमर्दलोवृत्तमंचयमलाभमर्दलाः ॥१९॥ अथरात्रिघटिकाज्ञानमाह । तरणेर्व्योममध्यस्थंनक्षत्रंचनगोनितम् । नखघ्नंनवभिर्भक्तंरात्रौचगतनाडिकाः ॥ ११० अथ दिवसघटिकाज्ञानमाह ॥ पादच्छायारसोपेताशशिनेत्रेन्दुकैर्भजेत् । लब्धांकेघटिकाज्ञेया शेषंपलमिहोच्यते ॥१॥ अथप्रसंगेनदिनप्रमाणानयनम् ।

| अथमेषादिनांदण्डपलादि | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सि | क | तु | वृ | ध | म | कुं | मी |
| ३ | ४ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ४ | ३ |
| ५१ | १३ | ४ | ४- | ४५ | ३५ | ३५ | ५ | ४२ | ४ | १३ | ४१ |

अयनादिवसादलितावसु ८ पंचकरा २ युता । दशाप्तघटिकाज्ञेयाशेषंपलमिहोच्यत ॥ २ ॥ अन्यच्च । अयनादिकवासरगमहृतागगनानल

बाणाश्वयांकयुताः । परिभाजितशून्यरसैर्घटिका कर्कादिनिशामकरादिदिनम् ३ इतिन
क्षत्रप्रकरणम् । अथमेषादीनांदण्डपलानि । रामः ॥ स्वरध्रयः प्रमितामेषेनाडीचापित्रयस्त
ताः । वृषेवेदघटीप्रोक्तापलानिचत्रयोदश ॥ ४ ॥ युग्मेपंचाभ्रयःकर्केपंचम्यात्रिभितास्त
था ॥ तथाचसिंहेबाणाश्चपंचाभ्रयइतीरिता ॥ ५ ॥ पंचदण्डाश्चकन्यायांबाणराम
पलानिच ॥ उत्क्रमेणतुलादौस्याद्राशिमानंप्रयोजयेत् ॥ ६ ॥ अथसमयशुद्धिः ॥ तत्रवास्त्यः
वक्रेत्ववातिचारेत्रिदशपतिगुरौदैत्यपूज्येचलुप्तेगुर्वादित्येऽधिमासेदिवसकरविधौसंगमेचैत्रपौषे ॥
विष्ट्यांकेतूदयेवायदिचसुरगुरौ सिंहसंस्थेमघेज्येत्वपंलुप्तेचवोढुः सुनियतमरणंदेवकन्यावरस्या
॥ ७ ॥ अन्यच्च ॥ नीचस्थोसिंहगोवायदिभवतिगुरुःसूर्यराशौचलीनः संयुक्तोवायदस्या
द्यथशतघ्रणिनाक्षीणरूपीथवालः ॥ ८ ॥ यात्रागेहाविवाहंश्रुतिरमरविधिर्यज्ञचूडादिसर्वं वा-
पीचोद्यानकूपंनभवतिशुभदंयंद्यादिष्टंचलोके ॥ ९ ॥ अतिचारगतेजीवेतंगार्थैनैवचेत्पुनः ।

लुप्तसंवत्सरोज्ञेयःकुंभा जोक्षभषैर्विना ॥ १० ॥ सिंहेगुरौगतेकार्य्योनविवाहःकदाचन । मेष-
स्थेऽपिदिवानाथेसिंहस्थोऽपिशुभप्रः ॥ ११ ॥ नर्मदापूर्वभागेतुशोणास्योत्तरदक्षिण ॥ गराड
क्याःपश्चिमेभागेमकरस्थोनदोषभाक् ॥ १२ ॥ मृगराशिगतेजीवेदिनषष्टिंपरित्यजेत् ॥ गर्गादि
मुनयःसर्वेजगदुःसर्वकर्मसु ॥ १३ ॥ वक्रेचैवातिचारेचह्यष्टाविंशतिवासरान् ॥ वर्जयेत्सर्वका
र्येषुकेचिदाहुर्महर्षयः ॥ १४ ॥ अथगुरुशुक्रयोर्वृद्धबाल्यत्वमाह ॥ वृद्धवाल्यंदशाहंचतथासप्त
दिनंपरैः ॥ केश्चित्पंच ५ दिनंप्रोक्तत्र्यहंप्रोक्तंतुकर्हिचित् ॥ १५ ॥ श्रीपतिः । जन्ममासिन
चजन्मभेतिथौनैवजन्मदिवसेऽपिकारयेत् ॥ आद्यगर्भदुहितुःसुतस्यवाज्येष्ठमासिनचजातुमं
गलम् ॥ १६ ॥ द्वौज्येष्ठौमध्यमौप्रोक्तौ एकज्येष्ठःशुभप्रदः ॥ ज्येष्ठत्रयंनकुर्वीताविदाहः सर्व
सम्मतः ॥ १७ ॥ अत्ररामः ॥ चूडाव्रतंचापिविवाहतोव्रताच्चूडाचनेष्टापुरुषत्रयांतरे ॥ वधू
प्रवेशाच्चसुताविनिर्गमःषण्मासतश्चाब्दविभेदतःशुभ ॥ १८ ॥ एकदिनेमंगलदोषमाह ॥

भ्रातृयुग्मेस्वसृयुग्मेकन्याभ्रातृयुगेतथा ॥ नकुर्य्यान्मंगलंकिंचिदेकस्मिन्मण्डपेऽहनि ॥ १९ ॥
गर्भिणीयस्यवैमातामासादूर्ध्वन्तुपञ्चमात् ॥ तस्यचूडोपनयनेगर्भिणयावाशिशोर्मृतिः ॥ २० ॥
वध्वावरस्यापिकुलेत्रिपूरुषेनाशंव्रजेत्कश्चननिश्चयोत्तरम् ॥ मासोत्तरं तत्रविपाहइष्यतेशांत्याथवासूतकनिर्गमेपरैः ॥ २१ ॥ अथकार्यविशेषग्रहशुद्धि । रविशुद्धौगृहकरणंरविगुरुशुद्धौव्रतोद्वाहौ ॥ क्षौरंताराशुद्धौ सर्वंचन्द्राश्रितंकर्म ॥ २२ ॥ इतिसमयशुद्धिप्रकरणम् । अथ संस्कारादिप्रकरणम् । तत्ररजोदर्शनस्नानम् । तत्रगमः ॥ हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः शक्रान्वितैः शुभतिथौशुभवासरेच ॥ स्नायादथार्तववतीमृगपौष्णवायुहस्ताश्विधातृभिरलं लभतेचगर्भम् ॥ २३ ॥ अथगर्भाधानम् । गंडान्तंत्रिविधंत्यजेन्निधनभं जन्मर्क्षमूलान्तकं दास्रंपौष्णमथोपरागदिवसंपातंतथावैधृतिम् ॥ पित्राः श्राद्धदिनंदिवाचपरिघाद्यर्द्धस्वपत्नीगमे भान्युत्पातहतानिमृत्युभवनं जन्मर्क्षतः पापभम् ॥ २४ ॥ भद्राषष्ठीपर्वरिक्ताश्चसन्ध्या ६ ।

३० । ९ । १४ भौमार्कार्कीनाद्यरात्रीश्चतस्रः ॥ गर्भाधानंत्र्युतरेंद्वर्कमैत्रे ब्राह्मस्वातीविष्णु
वस्वंबुपेसत् ॥ २५ ॥ केन्द्रत्रिकोणेषुशुभैश्चपापैस्त्र्यायाय ११ रिगैः पुंग्रहदृष्टलग्ने ॥ ओजांश
केऽब्जेपिचयुग्मरात्रौचित्रादितिज्याश्विपुमध्यमंतत् ॥ २६ ॥ अथसीमंतपुंसवनविष्णुपूजा ॥
जीवार्कारदिनेमृगेज्यनिऋतिः श्रोत्रादितिब्रध्नभैरिक्ता ४ । ९ । १४ । ऽमा ३० र्कंरसा ६ ६ ८
वर्जतिथिभि १८ र्मासाधिपेपीवरे ॥ सीमन्तोष्टमषष्ठमासशुभदैःकेन्द्रत्रिकोणे १ । ४ ।
७ । १० । ५ । ९ । खलै र्लाभारित्रिषु ११ । ६ । ३ । वा भुवान्त्यसदहैलग्ने
चपुंभांशके ॥ २७ ॥ मासेश्वरासितकुजेज्यरवीन्दुसौरिश्चंद्रात्मजारतनुपचन्द्रदिवाकरा
स्युः ॥ स्त्रीणांविधोर्बलमुशन्तिविवाहगर्भ संस्कारयोरितरकर्मसुभर्तुरेव ॥ २८ ॥ पूर्वोदितैः पुं
सवनंविधेयं मासेतृतीयेत्वथविष्णुपूजा ॥ मासेऽष्टमेविष्णुविधातृजीवैर्लग्नेशुभेमृत्युगृहेच
शुद्धे ॥ २९ ॥ अथप्रसूतिस्नानम् । पौष्णाश्वेन्दुकरस्वातहयेषुसूति स्नानंसमैत्रभरवीज्यकुजे

पुशस्तम् ॥ नार्द्रात्रयंश्रुतिमघान्तकमिश्रमूलत्वाष्ट्रज्ञसौरिवसु ८ पद् ६ रवि १२ रिक्तातिथ्याम् ॥ ३० ॥ अथनाश्रकर्म्म दैवज्ञचिन्तामणौ ॥ चित्रानुराधवसुपुष्यमृगार्क्कविष्णुधातोत्तराश्विवरुणादितिरेवतीपु ॥ केन्द्रस्थितेसुरगुरौशुभभेविधोश्च कार्य्यंशुभेन्हिनियतंशिशुजातकर्म्म ॥ ३१ ॥ जातकर्म्मोक्तनक्षत्रेकेन्द्रगेगुरुभार्गव । मा(?)एकादशेनामकुर्य्याच्छुभदिनेशिशोः ॥ ३२ ॥ द्वादशेदिदिवसेचान्येशुभदिवसेनामकर्मजगुः ॥ अथनिष्क्राशनम् ॥ ज्येष्ठादित्यकरोत्तराश्विविधुभवातानुराधोचरौ पूषावार्द्धकिमूलवासवगुरौमासोत्रि ३ तूर्य्ये ४ ऽथवा । मन्दारोज्भितवासरेचथवलेपक्षेशुभेरात्रिपेकुर्य्यादष्टमकेन्द्रकोणरहितेपापेशिशो निष्क्रमम् ॥ ३३ ॥ अथान्नप्राशनम् । रेवत्याश्विपुनर्वसूहरियुगेब्राह्म्यानुराधागुरुः स्वातीभानुमघाविशाखशाखरजनीनाथोत्तरात्वाष्टभे । वारेसूर्य्यशशांकबोधनगुरौशुक्रेऽयरिक्तेतिथौ वन्नप्रशनमीरितंमिथुनगेकन्याभ्रूपसूरिभिः ॥ षष्ठमासिसितपक्षेशुभः केन्द्रत्रिकोणगैः १।४।७।१।१५३३ ॥ त्रिषडायसते

क्रूरेचन्द्रमृत्युरविवर्जिते ॥ ३५ ॥ सप्तम्येकादशीपर्वद्वादशीवर्जितेतिथौ ॥ शिशूनांशोभनेच
न्द्रकारयेदक्षमक्षराम् ॥ ३५ ॥ अथकर्णवेधः ॥ ज्येष्ठादित्यसमीरणार्कशतभपुष्यश्रवोष्ठिश्वि
नीचित्रावैष्णवमित्रपौष्णमृगभे वारेबुधादित्रय ॥ त्र्या ३ या ११ रिः ६ ख १० गतेखलेचशुभके
न्द्रत्रिकोणेस्थिते १ । ४ । ७ । १० । ९ । ५ वर्षेत्र्युजिकर्णवेधनविधिः पक्षेसितेशेभिन ॥३६॥ जन्म
क्षेजन्ममासेच रिक्तापर्वाविमेपुच ॥ भद्रायामशुभेचन्द्रेनकुर्यात्कर्णवेधनम् ॥ ३७॥अथचूडाकरण
माह ॥ गीर्वाणाम्बुप्रतिष्ठापरिणयदहना धानगेहप्रवेशाश्चौलंराजाभिषेको व्रतमपिचशुभंने
वयाम्यायनेस्यात् ॥ नोवाबाल्यस्तवार्द्धेसुरगुरुसितयोर्नैवकेतूदयेस्यात्पक्षचार्द्धेचकेचिज्जहतितित
मपरे यावदीक्षांतदुग्रे ॥ ३८ ॥ तत्रदैवज्ञाचिन्तामणौ ॥ रेवत्यश्विपुनर्वसूसुरपतौ विष्णुत्रयेर्क
त्रय सौम्यवाक्पतिभेचसौम्यदिवसेसूर्य्येचसौम्यायने ॥ केन्द्र १ । ४ । ७ । १० द्वादशमृत्युकोण
८।५।९ रहित पापेशुभेकेन्द्रगे १।४।७।१० चन्द्रेकुंभ ११ मृगा १० ङ्गना ६ मिथुन ३ गो २ मी

नेहयाङ्गेशुभा ॥ ३९ ॥ नजन्ममासेनचजन्मभेतिथौविभौविरुद्धेशुभतारकासु ॥ युग्माब्दमासे नचकृष्णपक्षेचूडानकार्य्याखलुचैत्रपौषे ॥ ४० ॥ षष्ट्य ६ ष्टमी ८ द्वादशीच १२ रिक्ता ४।९।१४ पर्वावमेषुच ॥ गलग्रहेच भद्रायांक्षुरकर्म्मनकारयेत् ॥ ४१ ॥ अथनित्यक्षौरम् ॥ श्रीपतिः ॥ ष्ट ६ कृत्तिकाः पंच ५ मघात्रिमैत्रेऽब्रह्माष्टको ८ य श्चतुरुत्तराश्च ॥ क्षौरीसत्त्वर्पचतुराननोपि नभीयातीतिप्रकटप्रवादः ॥ ४२ ॥ येषुभेषुप्रशंसंतिक्षौरकर्म्ममहर्षयः । शंसंतितेषुभेष्वेवनखदं न्तविलेखनम् ॥ ४१ ॥ अथाक्षरारंभः ॥ गणेशविष्णुवाग्रमाःप्रपूज्यपञ्चमाब्दकातिथौशिवा ११ र्क १२ दिक् १० द्वि २ ष्ट ६ शर ५ त्रिके ३ रवावुदक् ॥ लघुश्रवोऽनिलान्त्यभादितीश्यतक्षमि त्रभेचरोनसत्तनौशिशोर्लिपिग्रहः सतांदिने ॥ ४२ ॥ अथविद्यारम्भः । मृगात्कराच्छ्रुतेस्त्रये ऽश्विमूलपूर्विकात्रयेगुरुद्वयेऽर्कजीवविच्छितेन्हिष्ट ६ शर ५ त्रिके ३॥ शिवा ११ र्क १२ दिक १० द्विके २ तिथौध्रुवान्त्यमित्रमेपरैः शुभैरधीतिरुत्तमात्रिकोण ९ । ५ केन्द्र १।४।१० गैःस्मृता

॥ ४३ ॥ अथधनुर्विद्योद्यमो दीपिकायाम् ॥ अदितिगुरुयमार्कस्वातिचित्राग्निपित्र्यध्रुवहरि
वसुमूलशिवन्दुभार्ग्यर्क्षकेषु ॥ विशनिशाशिबुधाहोविष्णुबोधेऽपिपौषे सुसमयतिथियोगेचापविद्या
प्रशस्ता ॥ ४४ ॥ अथव्रतबन्धः । रामः । विप्राणांव्रतबंधनंनिगदितंगर्भाज्जनेर्वाऽष्टमे वर्षेवाप्य
थपञ्चमेक्षितिभुजांषष्ठेतथैकादशे ॥ वेश्यानांपुनरष्टमेप्यथपुनः स्याद्वादशेवत्सरे कालेऽथद्विगु
णगतेनिगदितंगौणंतदाहुर्बुधाः ॥ ४५ ॥ अथनक्षत्राणि ॥ पूर्वाषाढहरित्रयेशिवमृगभेहस्तत्रयेरे
वती ज्येष्ठापुष्यभगेषुचोत्तरगतेभानौचपक्षोसिते ॥ गो २ मीन १२ प्रमदा ६ धनु ९ वंनचरे ५
शुक्रेगुरौभास्करे पञ्चम्यांदशमीत्रये १० । ११ । १२ । व्रतमिहश्रेष्ठंद्वितीयाद्वयोः ॥४६॥रामः ।
कविज्यचन्द्रलग्नपारिपौमृतौव्रतेऽधमाः ॥ व्य १२ येन्दुभार्गवौतथातनौ १ मृतौ ८ सुते ५ ख
लाः ॥ ४७ ॥ व्रतबंधेऽष्ट ८ षट् ६ रिःफ १२ वर्जिताः शोभनाः शुभाः ॥ त्रिषडाये ३। ६। ११
खलाः पूर्णोगोकर्कस्थोविधुस्तनौ ॥४८॥ वसिष्ठः । जीवोदयेजीवगृहोदयेवाजीवांशकेजीवनिरी

क्षितेच । अल्पश्रुतोऽपिव्रतबन्धनेनवागीशतुल्योभवतिद्विजेन्द्रः ॥४९॥ रामः ॥ कृष्णेप्रदोषेऽनध्या
येशनौनिश्यराहके । प्राक्सन्ध्यागर्जितेनेष्टोव्रतबन्धोगलग्रहे ॥ ५० ॥ कृष्णपक्षेचतुर्थ्याचसप्तम्या
दिदिनत्रयम् ॥ त्रयोदश्याश्चतुष्कंचह्यष्टावेतेगलग्रहाः ॥ १ ॥ शुचिशुक्रपौषतपसांदिगशिवरुद्रार्क
१०।२।११।१२। संख्यसितातिथयः ॥ भूतादित्रितया १४। ३० । १५मी ८ संक्रमणंचव्रतेऽनध्याः॥
५१ ॥ गर्गः ॥ अयनेदक्षिणेचैवशयनेबोधनेहरेः । व्रतबन्धंनकुर्वीतमन्वादिषुयुगादिषु ॥५२ ॥
युगादितिथयः ॥ माघेऽचदर्शीकृष्णानभस्येचत्रयोदशी ॥ तृतीयामाधवेशुक्लानवम्यूर्ज्जेयुगा
दयः ॥५४ ॥ मन्वादितिथयः ॥ अश्वयुशुक्लनवमीद्वादश्यूर्ज्जेमधौतृतीयाच ॥ भाद्रपदेपितृ
तीयाश्रावणमासेऽप्यमावास्या ॥ ५३ ॥ एकादशीचपौषेशुचिसितदशमीचसप्तमीमाघे ॥ बहु
लाष्टमीनभस्येप्याषाढेकार्त्तिकीचतद्वच्च ॥ ५५ ॥ फाल्गुनासितपञ्चदशीचैत्रेज्येष्ठस्यपौर्णमासीच ।

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चै | चै | ज्य | आ | श्रा | भा | फ | का | अ | पौ | मा | फा | मामा १४ | वै | भा | का | मा |
| ३ | ० | १५ | १० | ८ | ३ | ९ | १२ | ० | ११ | ७ | १५ | मन्वादितिथि | ३ | १३ | ९ | ३० |
| १५ | ० | ० | १५ | ३० | | | १५ | | | | | कृ.पक्ष.शु प. | शु | कृ | शु | कृ |
| | | शु | शु | कृ | शु | शु | शु | ० | शु | शु | शु | | युगादितिथयः | | | |

मन्वन्तरादयइ-
माश्चतुर्दशोक्ताः
बुधैःपुराद्याः।५७

बटुकन्याजन्मराशेस्त्रिकोणायाद्रिसप्तगः ५ । ९ । ११ । २ । ७ ॥ श्रेष्ठोगुरुः ख १० पट् ६ त्र्याद्ये ३ । १ पूज्यान्यत्रानिन्दितः ४ । ८ । १२ ॥ ५८ ॥ स्वोच्चेस्वभेस्वभेमैत्रेवास्वांशेवर्गोत्तमे गुरुः ॥ रिष्फाष्टतूर्य्यगो १२ । ४ । ८ पीष्टोनीचारिस्थः शुभोप्पसन् ॥५९॥ चैत्रमासेभास्करेमीनसंस्थे कुर्य्यां ३ न्मौञ्जीवंधनंब्रह्मणानाम् ॥ शुक्रास्यास्तंवाक्पतेर्नाबलात्स्यैनवब्रह्मचन्द्रयुर्व्वोश्चशुद्धिः ॥ ६० ॥ मीनेस्थितेर्कोद्विजपुङ्गवानांव्रतस्यबन्धःखलुमासिचैत्रे ॥ नजीवदोषोद्वविरुद्धदोषोगलग्रदानध्ययनादिदोषः ॥ ६१ ॥ मीनेगीर्व्वाणमंत्रिण्यथदिवसकरेचन्द्रताराश्रशुद्धौ चूडाकर्मोपनीतव्रतमिहनियतंप्रोच्यतेगर्गमुख्यैः ॥ गर्भाद्वर्षाष्ट ८ मेवापरिणयनविधिर्जन्म

तोवापिसौख्यंविद्यातत्वार्थवेत्तसुतधनसहितोभाग्ययुक्तोऽधिकारी ॥ ६२ ॥ इतिवृतबंधः।
अथाग्न्याधानम् ॥ यशोधरः ॥ रेवत्युत्तररोहिणीगुरुविधुज्येष्ठाविशाखाग्निभेजीवेर्शीतकरेकु
जेऽथतरणौ केन्द्रोत्रिकोणेथवा १।४।७।१०।६।५ ॥ पापेचोपेचयास्थिते ३।६।११।१० शुभतिथौ
लग्नेविधौशोभने कुर्य्यादग्निपरिग्रहेसुरगुरौपुष्टेशुभेरात्रिपे ॥ ६३ ॥ रामः ॥ सैकातिथिर्वार-
युताकृता ४ प्ताशेपगुणे ३ भे०. भुविवन्हिवासः ॥ सौख्यायहोमशशि १ युग्म २ शेषप्राणा
र्थनाशौदिविभूतलेच ॥ ६४ ॥ सूर्य्यभात्रित्रिभे ३ चन्द्रेसूर्य्यविन्छुक्रपङ्गवः। चन्द्रोरज्याग्रशि
खिनोनेष्टाहोमाहुतिः खले ॥ ६५ ॥ अथराज्याभिषेकः। दैवज्ञचिन्तामणौ ॥ राशीशलग्नेश

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| र | बु | शु | श | चं | मं | गु | रा | के | अ |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ० |

दशाधिनाथैः सूर्य्यारतारापतिभिर्बलिष्ठैः ॥ समुद्ध
तैर्भागवजीवचन्द्रैरिष्टोभिपेकोचमहीपतीनाम् ॥६६॥
रेवत्युत्तरमैत्रपुष्यहरिभेज्येष्ठाश्विनीरोहिणी
चन्द्रादित्यदिवाकरेशुभतिथौकेन्द्रेत्रिकोणेशुभे

१।४।७।१०।५।९॥ क्रूरेचोपचये ३।६।१०।११ स्थितेस्थिरगृहेवारेबुधादित्रयेचन्द्रेऽर्केचमहीभृतांसु
निर्वैरुक्तोभिषेकः शुभः ॥ ६७ ॥ अथदीक्षाकालः । अस्मत्संग्रहे ॥ वैशाखेश्रावणेचैत्रेआश्वि
नेकार्तिकेतथा ॥ मार्गशीर्षेतथामाघेफाल्गुनेचशुभावहा ॥ ६८ ॥ शैवागमे ॥ शुक्लपक्षेशुभादी
क्षा कृष्णेमध्यफलप्रदा । पञ्चम्ये ५ कादशी ११ शुक्लासप्तमी ७ चत्रयोदशी १३॥६९॥ दशमी१०
शुक्लपक्षस्यद्वादशी १२ तुविशेषतः॥ तृतीया ३ विहितानित्यंषष्ठीसर्वत्रनिन्दिता ॥६९॥ रामा
र्च्चनचन्द्रिकायाम् ॥ रवौगुरौशनौसोमेकर्तव्याबुधशुक्रयोः ॥ अश्विनीरोहिणीस्वातीविशा
खाहस्तभेषुच । ज्येष्ठोत्तरात्रयेष्वेवंकुर्य्यान्मंत्राभिषेचनम् ॥७०॥ तथाच ॥ चित्रार्द्रां रेवतीपुष्यं
मृगाख्यशततारकाः ॥ धनिष्ठा मित्रापित्र्यर्क्षेश्रवणेसर्वदीक्षणम् ॥७१॥ शुभोदयेशुभैःकेन्द्रधर्मात्म
ज १।४।७।१०।५।९ गृहस्थितैः ॥ सर्वदीक्षाप्रशस्तास्यात्पापैश्चत्रिषडायगैः ३।६।११।१ ॥ ७२ ॥
अथमोक्षदीक्षा ॥ श्रीपतिः ॥ देवार्च्चयेकर्म्म १० भावमपन्नेपापैर्धर्म्म ९ स्थानगैर्वीर्य्यहीनैः ॥

योगेप्रव्रज्याऽन्हेयसुस्थिरेत्त्वकार्यातज्ज्ञैस्तत्रदीक्षामुमुक्षोः ॥ ७३ ॥ सिद्धान्तशेखरे ॥ निन्दितेष्वपिकालेषुदीक्षात्ताग्रहणोशुभा ॥ रविग्रहेशीघ्रसद्धिर्दीर्घकालेशशिग्रहे ॥७४॥ अथविवाहः । तत्ररामः ॥ गुरुशुद्धिवशेनकन्यकानांसमवर्षेषुपडब्दकोपरिष्टात् ॥ रविशुद्धिवशाच्छुभोवराणामुभयोश्चन्द्रविशुद्धितोविवाहः ॥ ७५ ॥ तत्रमैथिलः ॥ रेवत्युत्तररोहिणीमृगमघामूलानुराधाकर स्वातीपुष्पमदातुलामिथुनगोलग्ने विवाहः शुभः । मासाः फाल्गुनमाघमार्गशुचयोज्येष्ठस्तथामाधवः शस्ताः सौम्यदिनेतथैवतिथयोरिक्ताकुहूवर्ज्जिताः ॥ ७६ ॥ अथवरकन्ययोः प्रीतिः ॥ वर्णोयोनिश्चमैत्रीचग्रहाणांगणसंज्ञकम् ॥ वर्गश्चराशिकूटंचनाडीचैतेयुणाधिकाः ॥ तत्रवर्णाः ॥ कर्कालिमीन ४।८।१२ विप्रेशोमेषः १ सिंहो ५ धनु ९ नृपः ॥ वृषः २ कन्या ६ मृगो १० वैश्यः शूद्रोयुग्म ३ तुला ७ घटः ११ ॥ ७८ ॥ वर्णश्रेष्ठातुयानारीतस्याभर्तानजीवति ॥ यदिजीवतिचेद्भर्त्ताविदेशनिरतः सदा ॥ ७९ ॥ अथयोनिः ॥

अश्वः शतीषाश्विन्यौरेवतीभरणीगजः ॥ छागश्चकृत्तिकापुष्योनागौचमृगरोहिणी ॥ ८० ॥
आर्द्रामूलमपि श्वानौमूषकौभगपैत्रकौ ॥ आदित्याहिश्चमार्जारौआपोविष्णुश्चमर्कटौ ॥ ८१ ॥
आहिर्बुध्न्यार्यमगावामैत्रज्येष्ठेमृगौतथा ॥ वसुपौष्ठपदेसिंहौ हस्तस्वातीचमाहिषौ ॥ ८२ ॥
चित्राविशाखेव्याघ्राख्यविभिजिद्विश्वनकुलौ ॥ योनयःकथितामानांवैरमैत्रीविचारयेत् ॥ ८३ ॥
श्रीपतिः ॥ गोव्याघ्रंगजसिंहमश्वमहिषंश्वैणान्वभ्रूरगं वैरंवानरमेषयोश्चसुमहत्तद्वद्बिडालेन्दु
रम् ॥ लोकानांव्यवहारतोन्यदपिचज्ञात्वाप्रयत्नादिदं दंपत्योर्नृपभृत्ययोरपिसदावर्ज्यः शुभ
स्यार्थिभिः ॥ ८४ ॥ राशयाधिपालघुजातके ॥ कुज १ शुक्र २ ज्ञ ३ न्द्व ४ र्क ५ ज्ञ ६ शुक्र ७
कुज ८ जीव ९ सौरि १० गुरवः १२ ॥ भेशाः ॥ ८५ ॥ शत्रूमन्दसितौसमश्चशशि
जोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समः शीतगोः ॥ जीवेन्दूष्णकराः
कुजस्यसुहृदोः ज्ञोरिःसितार्कादौ मित्रसूर्यसितौबुधस्यहिमगुः शत्रुः समाश्चापरे ॥ ८६ ॥

सूरेसौम्यासितावरीरविसुतोमध्येऽपरेत्वन्यथा सौम्यार्कौसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी ॥
शुक्रज्ञौसुहृदौसमः सुरगुरुः सौरस्यवान्येरयः ॥ ८७ ॥ इतिग्रहमैत्रीचक्रम् ॥ अथगणाः ।

अथमैत्रीचक्रंलिख्यते ।

| र | च | म | बु | बृ | शु. | श | ग्रहा |
|---|---|---|---|---|---|---|---|
| चं बृ मं | र | बु | र चं बृ | शु र | म च र. | श. बु. | बु शु. | मित्रा० |
| बु | बृ म श शु | शु श | म श बृ. | श. | मं बृ | बृ | समा |
| श शु | ० ० | बु. | च | बु. शु | र च | र चं मं | शत्रव: |

तत्रश्रीपातिः ॥ हस्तास्वातीश्रु
तिमृगशिरः पुष्यमैत्राश्विभा-
नि पौष्णादित्येजगुरिहबुधादे
वसंज्ञानिभानि ॥ पूर्वास्तिस्रः
शिवभरणिभरोहिणीत्र्युत्तराश्चप्राहुर्मर्त्याह्वयमुडुगणानूनेमतन्मुनीन्द्राः॥८९॥चित्राश्लेषानिर्ऋतिपि
तृभेवासवेर्वारुणर्क्षेशक्राग्न्योर्मैवरुणदहनर्क्षेचरक्षोगणोऽयम्॥श्रेष्ठाप्रीतिः स्वकुलगणयोर्मध्यमोदेव
पुसोर्मर्त्यैर्दैत्यैमरणमैमरराक्षसैर्वैरमाहुः ॥ ९० ॥ अथवर्गाः ॥ तत्रामः । अ८क५च६ट४त७प १।

य ३ श १ वर्गाः खगेशमार्ज्जारसिंहश्शुना ॥ सर्पाखुमृगावीनां निजमञ्च मवैरिणामष्टौ ॥ ११ ॥ अथराशिकूटरत्नमालायाम् ॥ पट् ६ काष्ट ८ के मृत्युरपत्यहानिः पाणिग्रहःस्यान्नवपञ्चमेषु ९।५॥ नैस्वंधनंद्वादशके २।१२ परे पुत्रेमातिरेकोहिवधूवरस्य ॥ १२ ॥ ग्रन्थांतरे ॥ एकाधिपत्येसमसप्तकेवालाभे तृतीयेदशमेचतुर्थे ॥ नाडीवियोगंगणनेत्रभावेनचिंतयेदुद्वहनादिकाले ॥ १३ ॥ ग्रहमैत्रत्वेराशिदोपोनास्ति ॥ अथनाडीचक्रम् । तत्रवसिष्ठः ॥ आवृत्तिभिर्भैस्त्रिभिरश्विभाद्याःक्रमोत्क्रमाभ्यांगणयेदुडूनि ॥ यदैकपर्वण्युभयोश्चधिष्ण्ये नेष्टानृनार्योर्भृशमेकनाडी ॥ १४ ॥ राश्यैकेचेद्भिन्नमृक्षंद्वयोःस्यान्नक्षत्रैक्येराशियुग्मंतथैव । नाडीदोषेनोगणानां चदोषोनक्षत्रैक्येपादभेदेशुभस्यात् ॥ १५ ॥ अथपादवेधः स्वरोदयो आद्यंशेनचतुर्थांश चतुर्थांशेनचादिमम् । द्वितीयनतृतीयंतुतृतीयेनद्वि

| आ | म | अं |
|---|---|---|
| अ | भ | कृ |
| आ | मृ | रो |
| पु | पु | श्ले |
| उ | पू | म |
| ह | चि | स्वा |
| ज्ये | अनु | वि |
| मू | पु | उ |
| श | ध | श्र |
| पू | उ | रे |

इतिनाडीचक्र

तीयकम् ॥ १६ ॥ अथविवाहादिवसशोधतम् तत्रादौदशयोगचक्रम् ॥ शून्य० क १ वेद४ऋतवो६
दश १० रुद्र ११ युक्ताऽ पञ्चैक १५ नागशशिरांशु १८ नवैक १९ खाश्विः २० ॥ आद्यर्क्षतः
शशिदिवक रभानियुक्त भागंचदेयमुडुभिर्दशयोगचक्रम् ॥ १७ ॥ वायुवर्षाग्निभूपालचौरः
मृत्युज्वरा क्रमात् ॥ वज्रवारेक्षतिर्नूनदशयोफलं लभेत् । १८ एतन्मितेशपांकेविवाहोनीपद्ध
अथलत्ता ॥ नक्षत्रं द्वादशंभानुस्तृतीयंलतयाकुजः ॥ पष्ठजीवोष्ठमसौरिर्हन्तिदांक्षिगातः सदा ॥ १९॥
वामेनसप्तमंचान्द्रिर्नवमंसिंहिकासुतः ॥ पञ्चमंभृगुजोहन्तिद्वाविंशपूर्णचन्द्रमाः ॥ २०० ॥ अथ
पातः अस्मत्संग्रहे ॥ सूर्यभात्सार्प्यमघाचित्रामैत्रंतथैवच ॥ श्रवणोरेवतीप्रोक्तंपातंभमुनिसंमत
म् ॥ १ ॥ अश्विनी भादितोगरायंपातभंयादिसंमतम् ॥ तद्दिनेचविवाहादिनकर्तव्यंकदाचन ।२॥
अथयुतिजामित्रदोपः आत्रिः ॥ पापात्सप्तमगः शशीयदिभवत्पापेनचेत्संयुतो यत्नोपिविवर्ज्जे
येन्मुनिमतो दोपापिसंकथ्यते ॥ यात्रायांविपदोगुहेपुमपुरोगोक्षगोमहा नुद्वाहेविधावाव्रते

चमरणांशूलंपुंस्कर्म्मणि ॥ ३ ॥ तत्रविशेषः ॥ पातयुक्तंचनक्षत्रंविवाहनक्षत्राच्चतुर्द्दश १४ वि
वाहेनेष्टाः ॥ क्रूरमुक्तंक्रूरगतव्यमृक्षंक्रूराक्रांतक्रूरविद्धंचनेष्टम् ॥ यन्मोत्पतभौमदिव्यान्तरिक्षैर्दुष्टत
द्दत्क्रूरलत्ताहतंच ॥ ४ ॥ चक्रेतस्मिन्नेकरेखास्थितेनज्ञेयंनूनंविद्धमृक्षग्रहेण ॥ केश्चित्तस्मिन्प्रो
च्यतेपादवेधोमानांचिन्त्यस्तत्रलत्तानिपातः ॥ ५ ॥ उत्तराषाढस्यांत्यपादः श्रवणाचतुर्दशदण्डका
दौंअभिजिद्भुक्तिः । यस्याःशशी ससप्तलाकभिन्नः पापैरपापैरथवाविवाहे ॥ उद्वाहवस्त्रेणतु
सान्वृताङ्गीस्मशानभूमौरुदतीप्रयाति ॥ ६ ॥ अथखार्ज्जूरचक्रम् ॥ तत्रश्रीपतिः । व्याघात
शूलपरिघव्यतिपातपूर्व्वगण्डातिगण्डकुलिशेषु सवैधृतेषु ॥
आदित्यचंद्रपितृसर्प्पभदाश्रमूलमैत्राख्यपुष्यसुरवार्धे किभानि
मूर्ध्नि ॥ ७ ॥ यस्मिन्दिनेकरेखायांसूर्य्याचन्द्रमसौस्थितौ ॥ दृष्टिपातस्तयोस्तस्मिन्मङ्गलंचावि
वर्ज्जयेत् ॥ ८ ॥ अथबाणपञ्चकम् ॥ धार्य्यातिथिः १५ सूर्य्य २ दशा १० ष्टन्वेदा ४ संक्रांसितो

यातदिनैश्च योज्या ॥ ग्रहैर्विभक्तायदियत्रपंच५शेषोरुजामिर्नृपचौरमृत्युः ॥९॥ अथोपग्रहाः ॥ भूकम्पः सप्त मर्क्षेभवातिसपितृभातृपंचमें ५ विद्युदुक्तःशूलंचैवाष्ट ८ संख्येशनीरितिदशमे १० केतुरष्टादशेच१८ादराडस्त्रिः पञ्च १५ संख्येसनवदशमितेनून्‌शुक्राप्रदिष्टाधिष्णायोदिःसप्तसंख्ये १२ मुनिभिरभिहितश्चात्रनिर्घातपातः॥१०॥भादेकाविंशति २१ मिताकथितास्तुमोह २१ निर्घात २२ कम्प २३ कुलिशाः २४ परिवेष २५ युक्ताः ॥ एष्विन्दु गेपुनशुभंखलुकर्म्मकार्य्यसिद्धि प्रयातिदहनास्त्रविषादिकर्म्म ॥ ११ अथ क्रान्तिसाम्यम् ॥ मुहूर्तचिन्तामणौ ॥ पञ्चा ५ स्याजौगो २ मृगौ १० तौलि ७ कुम्भौ १२ कन्या ६ मीनौ १२ कर्क्य ४ ली ८ चाप ९ युग्मे३॥ तत्रान्योन्यंचन्द्रभान्वोनिरुक्तंक्रान्तेः साम्यंनोशुभंमंगलेतत ॥ १२ ॥ अथपट्टाचक्रम ॥ तत्र काशीनाथः । पट्टाकारंलिखेच्चक्रमष्टकोणसमन्वितम् ॥ यस्मिन्नृक्षेस्थितः सूर्य्यस्तदाद्यंमध्यमं त्रयम् ॥ त्रयंत्रयं ३ चसर्वत्रततः पूर्वादितोलिखेत् ॥ १३ ॥ अस्मत्संग्रहे ॥ पक्षद्वयोर्न्नशुभद

धनलाभमृत्युदोभाग्यसंततिसुखेविधवान्यसक्ता ॥ धान्यादिसंचयकरीसुखसंपदाधिगम्यादितः फलमुशंतिचसव्यमार्गे ॥ १४ ॥ अथकर्तरीयोगः ॥ तत्रवराहः ॥ द्विपापग्रहयोर्मध्येचन्द्रलग्नेभविष्यतः ॥ तदामृत्युंविजानीयात्पंचाब्देनात्रसंशयः ॥ १५ ॥ सौम्ययोगात्कर्त्तरीयोगो नस्यात् ॥ वसिष्ठः ॥ एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः ॥ नश्यन्तिचन्द्रार्कबलोपपन्नेलग्नेयथार्काभ्युदयेतुदोषाः ॥ १६ ॥ उपग्रहर्क्षंकुरुबाह्लिकेषु कालिङ्गवङ्गेषुचपाततंभम् ॥ सौराष्ट्र शाल्वेषुचलत्तितंभंत्यजेत्तविंद्धकिलसर्वदेशे ॥ १७ । मुहूर्तचिन्तामणौ ॥ जन्मलग्नभयोर्मृत्युराशौनेष्टः करग्रहः ॥ एकाधिपत्येराशीशमैत्रेवानैवदोषकृत् ॥ १८ ॥ श्रीपतिः ॥ उदयगतनवांशस्वेशदृष्टोयुतोवानभवतियदिमृत्युः स्यात्तदानीवरस्य । परिणयसमयेचेन्नैवचास्तोदयेशः स्वपतिसहितदृष्ट्यामृत्युकारीचवध्वाः ॥ १९ ॥ विवाहपटले । भौमेलग्ने १ कलत्र ७ नैधनगतेशुक्रारि ६ सप्त ७ ष्ट ८ गेचन्द्रेरन्ध्र ८ विलग्न १ षष्ठ ६ निरते

लग्ना १ स्तगे ७ भास्करे ॥ तद्वद्भानुसुते ५ गुरौनिधनगे ८ सौम्येष्ट ५ जामित्रगे ७ जायां
७ भौधि ४ विलग्न १ कर्म्मं १० निरतेराहुर्नपाणिग्रहे ॥ २० ॥ रामः ॥ पापौकर्तारिकार
कौरिपुगृहेनीचस्तगौकर्तरीदोषोनैवासितेऽस्मिन्नीचगृहेतपष्ठ ६ दोषापिन ॥ २१ ॥ श्रीपतिः ॥
हिबुक ४ धर्म्म ९ सुतो ५ दय १ कर्म्मसु १० त्रिदशराजगुरौयादिवासितौ ॥ यदशुभंशुभतां
समुपैतितच्छुभफलंनितरामभिवर्द्धते ॥ २२ ॥ अब्दायनर्त्तुतिथिमासभपक्षदग्धास्तिथ्यन्धकाण
वधिरांगमुखाश्चदोषः ॥ नश्यन्तिविदगुरुसितेष्विहकेन्द्रकोणेतद्वच्चपापविधुयुक्तनवांशदोषः
॥ २३ ॥ लग्नाधिपंविनाघ्नेसर्वेखगानेष्टाः ॥ अथगोधूलिः ॥ नास्यामृक्षंनतिथिकरणंनैवल
ग्नस्यचिन्तानोवावारोनचलवविधिर्नोमुहूर्तस्यचिन्ता ॥ नोवायोगोनमृतिभवनंनापिजामि
त्रदोषोगोधूलिः सामुनिभिरुदितासर्वकार्येप्रशस्ता ॥ २४ ॥ ग्रन्थान्तरे ॥ लग्नंयदानास्ति
विशुद्धमन्यद्गोधूलिकं साधुतदावदन्ति ॥ लग्नेविशुद्धे सतिवीर्ययुक्ते गोधूलिकं नैवव

दन्तिसन्तः ॥ २५ ॥ रामः ॥ अस्तंयातेगुरुदिवसेसौरे सार्कलग्नान्मृत्यौ ६ रिपु ८ भवने लग्नेचेन्दौ ॥ कन्यानाशः तनु १ मदन ७ मृत्यु ८ स्थे भौमेवोढुर्नाशोलाभे १० धनसहजे ३ चन्द्रेसौख्यम् ॥ २६ ॥ अथवधूप्रवेशः ॥ समाद्रिपञ्चाङ्कदिनेविवाहाद्वधूप्रवेशोष्टि-१६ दिनांतराले ॥ शुभः परस्ता द्विपमाब्दमासेदिनेस ५ वर्षात्परतोयथेष्टम् ॥ २७ ॥ अथ प्रवेशनक्षत्राणि ॥ ध्रुवाक्षिप्रमृदुश्रोत्रवसुमूलमघानिले । वधूप्रवेशः सन्नष्टोरिक्ता ४।९।१४ रार्के १२ बुधेपरैः ॥ २८ ॥ अथद्विरागमः । दैवज्ञचिन्तामणौ ॥ ज्येष्ठापुष्यपुनर्वसूत्तरहरिब्रह्मानु-राधाश्विनीहस्तादित्रयपौष्णमूलमृगभेमेषालिकुंभरवौ । कन्यानौलि ७ नृयुग्म ३ मीन १२ मकरे १० लग्नेचयात्रातिथौ नारीणांशुभदोद्विरागमविधिर्जीवज्ञशुक्रेह्नि ॥ २९ ॥ शुक्लेपक्षे कुर्य्यामिति ॥ अथपुंनार्य्योः प्रथमसमागमे । उत्तरात्रयरोहिणीयांपुष्येमैत्रेकरेमृगे ॥ चित्रास्वातीविशाखासु पुंनार्य्योः संगमः शुभः ॥ ३० कन्या ६ जूक ७ वृषा २ अलि ८ मीन १२

भवनेकेन्द्रस्थिते सद्ग्रहेपापेविक्रम ३ लाभ ११ वैरि ६ सहितेद्यूने ७ शुभैरीक्षिते । वारेसौ
म्यदिनेष्वविष्टिकरणे शस्तेचरिक्ताष्टमी राकामारहितेतिथौशुभविधौ दारोपभोगः स्मृतः ॥ ३१ ॥
दैत्येज्योह्यभिमुखदक्षिणेयदि स्याद्गच्छेयुर्नहि शिशुगर्भिणीनवोढाः ॥ बालश्चेद्व्रजतिविपद्य
तेनवोढाचे द्वन्ध्याभवतिच्यगर्भिणीत्वगर्भा ॥ ३२ ॥ नगरप्रवेशविपयाद्युपद्रवे करपीडने वि-
बुधतीर्थयात्रयोः ॥ नृपपीडनेनववधूप्रवेशने प्रतिभार्गवोभवतिदोषकृन्नहि ॥ ३३ ॥ पित्र्येगृ
हेचेत्कुच पुष्पसंभवस्तदा न दोषः प्रतिशुक्रसंभवः ॥ भृग्वङ्गिरोवत्सवासिष्ठकश्यपात्रीणांभरद्वाज
मुनेः कुलेतथा ॥ ३४ ॥ इतिसमुसंग्रहेविवाहद्विरागमनप्रकरणम् ॥ अथदेहगयात्रायांराहुवि
चारः ॥ अलिधनुमकरार्केपूर्वसंस्थेजारहुर्घटम्ष्फरतथाजे दक्षिणेसैंहिकेयः ॥ वृषमिथुनकुलीर
पश्चिमेदिग्विभागे हरियुवतितुलायां चोत्तरेदंयगराहुः ॥ ३५ ॥ सोमदत्तः । अग्रतोराहुवेध-
व्यं दक्षिणेसुतहाभवेत् ॥ पष्ठेपुत्रवतीप्रोक्तावमेसौभाग्यदायिनी ॥ ३६ ॥ पंथाभृगुर्दक्षिणेस-

न्मुखस्थो मृगीदृशानामशुभोगमेसदा ॥ तथैवराहुः परिकल्पनीयो द्व्यंगेनकार्येमृगजादिलो
मम् ॥ ३७ ॥ अथयात्राप्रकरणंप्रारभ्यते ॥ तत्ररामः ॥ नषष्ठीनचद्वादशीचाष्टमीनोसिताद्या
तिथिः पूर्णिमामानारिक्त । हयादित्यमैत्रेंदुजीवांत्यहस्तः श्रवोवासवैरेवयात्राप्रशस्ता ॥ ३८ ॥
पूषाभात्कृत्तिकाद्येतु पादेचद्राव्यवस्थितः ॥ तावच्छुक्रोभवेदन्धः सन्मुखदक्षिणेशुभः ॥ ३९ ॥
अथसर्वांकविधिः ॥ तिथिवारंचनक्षत्रंनामाक्षरसमन्वितम् । द्वि २ त्रि ३ चतु ४ र्मिर्गुणितं
रस ६ सप्त ७ ष्ट ८ भाजितम् ॥ ४० ॥ आदिशून्येभवेद्धानिर्मध्य शून्येरिपोभयम् ॥ अन्त्य
शून्येभवेन्मृत्युः सर्व्वाकेविजयीभवेत् ॥ ४१ ॥ श्रीपतिः । मूर्तिः १ कोशो २ धन्विनो ३
वाहनानि ४ मंत्रः ५ शत्रुः ६ मार्ग ७ आयु ८ मनश्च ९ ॥ व्यापार १० श्चाप्राप्ति ११
रप्राप्ति १२ रेवंलग्नात्भावाद्वादशैतेविचत्याः ॥ ४२ ॥ घ्नंतिक्रूरास्त्र्याया ३ सि ११ वर्जांहि
भावाननव्यापारंनिघ्नतः सूर्यभौमौ । सौम्याः पुष्यंत्येवहित्वारिभावं शुक्रश्चास्तंमृत्युमूर्तिस्त-

येन्दु ॥ ४३ ॥ अथायारिपुयमारोचेच्छक्तिभाजः शुभग्रहाः ॥ प्रयाणेनृपतेर्यस्य हस्तस्था
तस्यमेदिनी ॥ ४४ ॥ गुरुर्लग्नरविः पष्ठ रन्ध्रेनेन्दुस्वगच्छतः ॥ यस्यतस्यारिसेनाग्रे खलमै
त्रीवनास्थिरा ॥ ४५ ॥ गुरौकेन्द्रे १ । ४ । ७ । १० त्रिकोणे ५ । ९ चरवोलाभे ११ चक्र
मणि १० ॥ कल्याणयोगोभुपस्य यातुः कल्याणकृद्भवेत् ॥ ४६ ॥ ग्रन्थान्तरे ॥ लग्नारिकर्म्म
हिबुकेषुशुभाक्षितज्ञोद्यूनान्त्य लग्नरहितेष्वशुभग्रहेषु ॥ यातुर्भयं न भवतिप्रत्तरेत्समुद्रंय
द्यश्मनाकिनुमतारिसमागमेन ॥ ४७ ॥ श्रीपातिः ॥ एकेनापिज्ञास्फूजिद्वाक्पतीनांयो
गः प्रोक्तोकद्यर्मातमजेषु १।४ ७।१०।९।५ ॥ द्वाभ्यामेषांवाधियोगाभिधानं नूनंसर्वैरेवयोगाधि
योग ॥ ४८ ॥ योगेनतेनृपतयोरिगृहंव्रजान्ति क्षेमन्नतेगमनमागमनञ्चकुर्य्युः । क्षेमंयशोरिपु-
विनाशमथाधियोगयोगाधियोगद्वितयेलभेतधरित्रीम् ॥ ४९ ॥ जननसमयलग्नान्निधनेजन्म
भाद्वानिजारिपुभवनाद्वाशत्रुभेलग्नयाते । पातिभिरुदितवीर्यैर्लग्नगैः पार्थिवानांगमनमथवि

पंवा भक्षणांतुल्यमेव ॥ ५० ॥ रत्नकोशे । षष्ठा ६ ष्ठमान्त्या १२ स्तगतेविलग्नपेयात्रानदेयाशु
भदेशपिग्रहैः ॥ विनश्यतेयांफलत्रलग्नपोमृत्युंकरोत्येवयतोहिभुपतेः ॥ ५१ ॥ लग्नाधिपेसुप्ये
सुतथनीचगे पुंराजितेनैधनशत्रुगेहे ॥ एवंनृपोयोरिजातयोगे प्राप्नोतिमृत्युयवनावदन्ति
॥ ५२ ॥ अथप्रस्थानविधिः ॥ गृहाद्गृहान्तरङ्गर्गः ॥ सीम्नः सामांतरंभृगुः ॥ शरक्षेपाद्भरद्वा
जो वसिष्ठोनगराद्बहिः ॥ ५३ ॥ प्राच्यांमहान्तमुनयः प्रवदन्तिसप्तयाम्यामतीवशुभदानिदि
नानिपञ्च । त्रीण्येवपश्चिमदशाक्षितिनायकानां प्रस्थानकेषुदिवसद्वयमुत्तरेस्यात् ॥ ५४ ॥ मु
क्त्वा गच्छतियदिचेत्तैलगुडक्षीरपक्वमांसानि ॥ विनिवर्ततेसरुग्णः स्त्रींद्विजमवमान्यगच्छतो
मृत्युः ॥ ५५ ॥ शकुनादिग्रन्थविस्तरभयान्नालिखितम् ॥ यतोबालानांग्रन्थविस्तरोदुस्तरः ॥
अन्यग्रन्थादवगम्याविरुद्धशकुनं विचार्य्यव्रजेत् ॥ सौदामिनीवर्षणावर्जितेषु नाकालजप्रवि
शन्नरेन्द्रः ॥ आसप्तरात्रात्ध्रुवमद्भुतेषुदिव्यान्तरिक्षक्षितिजेषुचनम् ॥ ५६ ॥ इतिलघुसंग्रहेया

त्राम्रकरणम ॥ तत्ररामः ॥ यद्धदयं २ क १ सुतेश ५।११ दिग्मित १० मसौग्रामः शुभोनाम
भास्वं वर्गोद्विगुणांविधायपरवर्गाढ्यंगजैः शेपितम् ॥ काकिणयस्त्वनयोश्चतद्विरतो यस्याधि
कः सोऽर्थदोथद्वारंद्विज ८ । ४ । १२ वैश्य २ । ६ । १० शूद्र ३ । ७ । ११ नृप १ । ५ । १ राशीनां
हितपूर्वतः ॥ ५७ ॥ गो २ सिंह ५ नक्र १० मिथुनं ३ निवसेन्नमध्ये ग्रामस्यपूर्वककुभोत्ति ८
झपा १२ ङ्गनाश्च ६ ॥ कर्कौ ४ धनु १ स्तुलभ ७ मेप १ घटा ११ श्चतद्वर्गाः स्वपञ्चमपरात्र
त्तिनस्युरेन्द्रयाः ॥ ५८ ॥ एकोनितेष्टर्क्षहताद्वितिथ्योरूपोनितेष्टायहतेन्दुनागैः ॥८ । १॥ युक्ता
घनैश्चापियुतोविभक्ता भूपाश्विभिः शेपमितोहिपिराडः ॥ ५९ ॥ स्वेष्टायनक्षत्रभवोऽर्थदैर्घ्यह
तस्याद्विस्तृतिविस्तातेहस्त्वदीर्घता ॥ आयाध्वजोधूम्रहरिश्वगोखरे भघ्वांक्षकाः पिराडइहाष्टशेपि
ते ॥ ६० ॥ असमतसग्रहे । पिराडोनवा ९ ष्टा ८ मि ३ गजा ८ ष्ट ८ संख्यैः क्रमेणगुणायः खलु
पञ्चधाच ॥ विभाजितेष्टा ८ र्क १२ गजाक्षि २८ खार्के १२० रायोधनक्षेमगृहमुक्तम् ॥

६१ ॥ ध्वजोधूम्रोऽथासिंहश्वसौरभेयः । खरोगजः ॥ ध्वांक्षश्चेतिक्रमेणैवह्यायाष्टकमुदाहृतम् ६२॥
रामः ॥ ध्वजा दिकाः सर्वादिशिध्वजेमुखं कार्यंहरौपूर्वयमोत्तरेतथा ॥ प्राच्यांवृषेप्राग्यमयोर्गं
जेथवापश्चादुदक्पूर्वयमेद्विजादितः ॥ ६३ ॥ भनाग ८ तष्टव्ययईरितोऽसौध्रुवाऽदिनामाक्षरयु
क्तसपिराडः ॥ तष्टोगुणौरिन्द्रकृतान्तभूपाद्यं शाभयस्तुहंशाभयेयुन्नशुभोन्तकोत्र॥ ६४॥ दिक्षुपुर्व्वादि
तः शालाध्रुवाभू १ द्वौ २ कृता ४ गजा ८ ॥ शालाध्रुवाङ्कसंयोगः सैकोवेश्मध्रुवादिकम्
॥ ६५ ॥ श्रीपतिः ॥ ध्रुवञ्च १ धान्यञ्च २ जयश्च ३ नन्दः ४ खरञ्च ५ कान्तञ्च ६ मनोर
मञ्च ७ ॥सुवक्त्रसंज्ञं ८ खलुदुर्मुखाख्यं ९ क्रूरं १० विपक्ष ११ धनदं १२ क्षयञ्च १३ ६६ मा
क्रन्द १४ संज्ञंविपुलाह्वयञ्ह १५ स्यात्षोडशेतद्विजया १६ भिधानम् ॥ वास्त्वारम्भेनक्षत्राणि
यशोधरः ॥ ध्रुवहरिमृदुपुष्यः स्वातिहस्तानुराधा दितिवरुणधनिष्ठामूलभसौम्यवारे ॥
उपचयगृहसंस्थैःपापगैःकेन्द्रकोणे १।४।७।१०।५ बुधगुरुभृगुपुत्रे वेश्मकार्य्यंप्रशस्तगृ ॥ ६७ ॥

तिथावरिक्तेशुभदेनिशाकर योगेशुभेलग्नगतोस्थिरेभे । द्वयंगेच ३।६।९।१२ कर्तुः शुभदेविलग्ने
पापैर्ग्रहैर्मृत्युविवर्जितगृहे ॥ ६८ ॥ वैशाखेश्रावणेमार्गे फाल्गुनेचविशेषतः ॥ पत्नीपुत्रार्थ
लाभस्यादगृहकर्तुर्न्नसंशय ॥ ६९ कृष्णपक्षेऽशुभंज्ञेयं शुक्लेसर्वसमृद्धिदम ॥ एमावा
स्तुकार्यनिषिद्धाः परिकीर्त्तिताः ॥ ७० ॥ कर्क ४ नक्र १० हरि ५ कुंभ ११ गतेर्केपूर्वप
श्चिमसुखानिगृहाणि ॥ तौलि ७ मेष १ वृष २ वृश्चिक ८ जातेदक्षिणोत्तरसुखानिचकृत्वा ॥७१॥
पूर्वपश्चान्सुखंगेहं नलग्नान्त्यारिगोविधो ॥ सौम्ययाम्यसुखंगेहंकुर्य्यात्पातालखेगते ॥ ७२ ॥
रवौगृहस्थैर्गृहिणाशिशांके धनंसितेदेवगुरौचसौख्यम् ॥ विनाशमायातिबलेनहीने नीचस्थिते
वास्तुमुपगते ॥ ७३ ॥ सूर्य्यभादन्वयेद्वास्तुचक्रंचदिनभावधि ॥ अश्वई ७ शा १२ स्वैरः १०
प्रोक्तमत्तसफलदंबुधैः ७४ ॥ कुपवास्त्वोर्मध्यदेशेऽर्थहानिस्त्वीशानादौपुष्टिरैश्वर्य्यवृद्धिः ॥
नाशः सूनोः स्त्रीविनाशोमृतिश्चसम्पत्पीडाशत्रुतः स्याच्चसौख्यम् ॥ ७५ ॥ देवालयेगेहविधौजलाश

येराहोर्मुखंशंभुदिशोर्विलोमतः ॥ मीनार्कसिंहार्कमृगार्कतास्त्रिभे खातेमुखात्पृष्ठविदिक्शुभाभ
वेत् ॥ ७६ ॥ ईशानवायव्यादिक्रमेणाप्लवविचारः ॥ पूर्वेप्लवोवृद्धिकरी धनदश्चोत्तरप्लवः ॥ या
म्यांरोगप्रदोज्ञेयो धनहामश्चिमेप्लवः ॥ ७७ ॥ नवभागंगृहंकृत्वापंचभागंतुदक्षिणे । त्रिभाग
मुत्तरेकार्य्यंशेषंद्वारप्रकीर्तितम् ॥ ७८ ॥ अथप्रवेशः । तत्रवसिष्ठः । अथप्रवेशोनवसद्मनस्तुसौ
म्यायने जीवसिते बलाढ्ये ॥ वास्त्वर्चनं भूतबलि विधायासेष्टः शुभाहेष्ठगृहप्रवेशः ॥ ७८ ॥
माघेर्थलाभप्रवेशे पुत्रार्थलाभः खलुफाल्गुनेच ॥ चैत्रेऽर्थहानिधनधान्यलाभो
वैशाखमासेसुखपुत्रलाभः ॥ ज्येष्ठेचमासेसुपरेसुनूनं हानिप्रदः शत्रुक्षयप्रदश्च ॥ ७९ ॥
जीर्णगृहेऽग्न्यादिभयान्नवेपि मार्ग्गोर्ज्जयोः श्रावणकेपिसतस्यात् ॥ वंशोम्बुपेज्यानिलवासमेषु
नावश्यमस्तादिविचारणात्र ॥ ८० ॥ अथप्रवेशनक्षत्राणि ॥ हस्तःपुष्यपुनर्वसूशताभिपास्वा
तीतथारेवती रोहिण्युत्तरभत्रयंहीरमृगो मूसंधनिष्ठातथा ॥ कन्याकुंभमृगालिसिंहमिथुनं

स्वर्क्षस्वराश्युद्गमे वाराजीवशनिज्ञसोमभृगुजा वेश्मप्रवेशेशुभाः ॥ ८१ ॥ तत्रगुरुः ॥ नन्दा भद्राजयाचैव पूर्णाचातिथयः शुभाः ॥ अमावास्याचरिक्ताश्चवर्ज्जनीयाः प्रयत्नतः ॥ ८२ ॥ श्रीपतिः ॥ त्रिकोण १।५ केन्द्रगैः १।२।७।१० शुभैस्त्रकराटकाष्टमत्यगैः ८ ॥ असदग्रहैः स्थिरो दयंगृहंविशेद्दत्लाविधौ ॥ ८३ ॥ अथकुंभचक्रम् ॥ वक्रेभूराविभाप्रवेशसमये कुम्भेग्निदाहःकृता ४ प्राच्यामुद्वसनंकृता ४ यमगता लाभः कृताः ४ पश्चिमे ॥ श्रीर्वेदा ४ कालिरुत्तरेयुगमिता

| मुख | पूर्वे | दाक्षि | पश्चिम | उत्तरा | गर्भ | गुद | कण्ठ |
|---|---|---|---|---|---|---|---|
| १ | ४ | ४ | ४ | ४ | ४ | ३ | ३ |
| दाहः | उद्वसन | लाभ | श्री | काल | नाश | स्थैर्य | स्थिता |

गर्भेविनाशोगुदे रामःस्थैर्य्यमतः स्थिरत्व मनलो कण्ठेभवेत्सर्वदा ॥ ८४ ॥

इति श्रीलघुसंग्रहेलक्ष्मीनारायणकृते वास्तुप्रकरणम् ॥ अथ जातकाध्यायः ॥ लघुजातके ॥ षष्ठ ष्टमवाचन्द्रः सयोमरणायपापसंदृष्टः॥ अष्टाभिः यशुभदृष्टोवर्षैर्मिश्रैस्तदर्द्धेन॥८५॥ सुत५ मदन ७ नवान्त्य १२ लग्न १ रन्ध्रे ८ ष्वशुभयुतोमरणायशीतरश्मिः ॥ भृगुसुतशशिपुत्रदेवपूज्यो

यदिब्रात्तिभिर्नयुतोऽवलोकितोवा ॥ ८६ ॥ एकोपिपापोष्टमगः शत्रुगृहेपापवीक्षितोव-
र्षात् ॥ मारयतिनरंजातंसुधारसोयेन पीतोपि ॥ ८७ ॥ लग्नाधिपजन्मपतो षष्ठा ६
ष्टम रिः फ १२ गेः प्रसवकाले ॥ अस्तमितोमरणाकरः शशिप्रमितेऽ वेदवर्षम ॥ ८८ ॥
जातकाभरणे ॥ राहुर्भवेजन्मनिकेन्द्रवर्तीक्रूरग्रहैश्चापिनिरीक्ष्यमाणः । भवन्तिवर्षैर्दशभिर्वि
नाशंवदन्तिवापोडशकैश्चकेचित् ॥ ८९ ॥ अथ शुभपक्षयोगाः । पक्षेसितेभवति जन्मयदिक्ष
पायांकृष्णेतथाहनिशुभाशुभ दृश्यमानः ॥ तंचन्द्रमारिपुविनाशगतोपियत्नादापत्सुरक्षतिपि
तेवशिशुंनहन्ति ॥ ९० ॥ एकोपियदिकेन्द्रस्थोभार्गवोज्ञोगिरांपतिः । नवमेवासुतस्थानेसर्वा
रिष्टनिवारयेत् ॥ ९१ ॥ लग्नाधिपोवाजीवोवा शुक्रोवायदिकेन्द्रगः । तस्यपुरुपस्यदीर्घायुः
सभवेद्राजपूजितः ॥ ९२ ॥ यदावीक्षितोयामिनोशोदिनेशंबुधश्चापिशीतांशुपुत्रोक्षितश्च ॥
तदाज्योतिपान्मेतगणयेनकिंस्यात्सजातोभवेदीश्वरोदीर्घजीवी ॥ ९३ ॥ लघुजातके । रविव

ज्यंद्वादशगैरनफाचन्द्राद्द्वितीयगैः सुनफा ॥ उभयस्थितैर्दुरुधराकेमद्रुमसंज्ञकश्चान्ये ॥ १४ ॥
सच्छीलविषयसुखान्वितप्रभुख्यातियुक्तमनफायम् । सुनफायांधीधनकीर्तियुतमात्मजितैश्वर्य्य
भाजनंकुरुते ॥ १५ ॥ बहुभृत्यकुटुम्बारं भोनित्यमुद्विग्नमपिदुरुधराख्ये । भृतकंदुःखितमधनं
जातककेमद्रुमेविंद्यात् ॥ १६ ॥ जातकाभरणे । तत्र डिंभाख्याचक्रविचारः । डिभाख्यचक्रंरवि
भात् न्यसमानांत्रयंन्यसेन्मूर्द्धिमुखेत्रयंच ॥३ ॥ द्वे २ स्कंधयोर्द्वे २ भुजयोर्द्वयंच पाणिद्वयेवक्षसि
पंचभानि ॥१॥ नाभौचलिंगेचतथैकमेकं जान्वोर्भपट्कंपरिकल्पनीयम् । पादद्वयेभद्वितयंक्रमेण
मुनिप्रवर्यैः फलमुक्तमत्र ॥ १७ ॥ अल्पायुश्चरणस्थितेचगमनंदेशांतर जानुभैर्गुह्येस्यात्परदा
रलंपटपटुर्नाभौचसंतुष्टये ॥ ऐश्वर्यंहृदिचौरकर्मकरयोर्बाह्वोर्बलंस्कंधयोर्द्व्ययवक्रगनेचइष्टम
श्नंराज्यंशिरस्थोडुभिः ॥ १८ ॥ कन्याजन्मनिडिंभचक्रजपार्णवे ॥ मस्तकेत्रीणिऋक्षाणि
सप्तभानिमुखेन्यसेत् । स्तनद्वयेऽष्टऋक्षाणि हृदयेत्रीणिभानिच ॥ ११ ॥ नाभौत्रीणितथागुह्ये

त्रीणिसूर्यर्क्षतोन्यसेत् । कन्याजन्मनिडिंभाख्यंचक्रमुक्तंस्वयंभुवा ॥ १०० ॥ शीर्षेसन्तापयु
क्तास्यान्मुखेधान्यधनान्विता । म्तनदयेस्वामिप्रेमवृद्धकामस्तथापुनः ॥३०१ ॥ हृदिसौख्ययुता
गुह्येनारीस्याद्व्यभिचारिणी । असन्तुष्टास्वामिरताभौस्याज्जन्मकालके ॥ २ ॥ अथदशा ॥
त्रि ३ चतु ४ त्रि ३ चतु ४ श्चैवत्रिचतु त्रि ३ चतुः क्रमात् । रंचंमंबुगुशुशनंकृत्तिकादि
दशांलिखेत् ॥ ३ ॥ आदित्येषड्चवर्षाणि ६ सोमेपंचदशानि १५ च ॥ भौमेतुचाष्टवर्षाणि ८
बुधेसप्तदशानि १७ च २ ॥ शनौचदशवर्षाणि १० गुरौह्येकोनविंशतिः १९ ॥ राहोर्द्वादशवर्षा
णि १२ शुक्रस्याप्येकविंशतिः २१ ॥ ४ ॥ क्रूरग्रहदशायांचबहुशोजायतेक्षतिः ॥ शुभग्रहद
शांप्राप्यनराणांसुखमादिशेत् ॥ ५ ॥ लग्नाच्चतुर्थगः पापोयदिस्याद्बलवत्तरः ॥ तदामातृवधं
कुर्यात्तत्केन्द्रेचापरोयदि ॥ ६ ॥ द्वादशेरिपुभावेवायदापापग्रहोभवेत् । तदामातृवधंकुर्यादद
रिराशौस्थिरोयदि ॥ ७ ॥ इति लघुसंग्रहेजातकप्रकरणम् ॥ अथ प्रश्नविचारः । तत्रपद्यं

चाशिकायाम् ॥ वृषसिंहवृश्चिकघटैर्वृद्धिस्थानंगमागमोनस्तः ॥ नमृतंनचापिनष्टं नरोगयोर्यां
तिर्नचाभिभवः ॥ ८ ॥ तद्विपरीतंतुचरैर्द्विशरीरैर्मिश्रितंफलंवाच्यम् । लग्नेन्दोर्वक्तव्यंशुभ
दृष्ट्याशोभनमतोऽन्यत् ॥ ९ ॥ अथलाभप्रश्नः ॥ त्रि ३ पञ्च ५ लाभा ११ स्त ७ मयेषु
सौम्यालाभप्रदानेष्टफलाश्चपापाः ॥ तुलाथकन्यामिथुनंघटश्चनृराशयस्तेषुशुभंवदंति ॥ १० ॥
इंदुर्द्विसप्त दशमायरिपुत्रिसंस्थः पश्येद्गुरुः शुभफलप्रमदाकृतंस्यात् ॥ लग्नार्थधर्म्मसुतनैध
नागाश्चपापाः कार्य्यार्थनाशभयदाः शुभदाः शुभाश्च ॥ ११ ॥ भट्टोत्पले । पापैर्लग्नोपगतैः
शरीरपीडांविनिर्दिशेत्कलहम् ॥ सुखसस्थैः सुखनाशं गृहभेदंबन्धुविग्रहंचवदेत् ॥ १२ ॥
अस्तेगमनविरोधः कर्म्मस्थैचान्यनाशश्चा शुभदृष्टिसंप्रयोगात्प्रश्नस्यकृच्छ्रकृद्वदेत्सिद्धिम्॥१३॥
दूरगतस्यागमनंसुतधनसहजस्थितैर्ग्रहैर्लग्नात् ॥ सौम्यैर्नष्टप्राप्तिर्लघ्वागमनगुरुसिताभ्याम् ॥१४॥
द्वितीयकेन्द्रतोऽभ्येतियदाखेटस्तदागमः ॥ आपियोस्तगृहंदृष्ट्वा ब्रूयादितिप्रशंकितम् ॥ १५ ॥

पञ्चमेशोथलग्नेशोविषमर्क्षगतोयदा ॥ पुत्रजन्मप्रदोज्ञेयः कन्यानांसमराशिगः ॥ १६ ॥
सुताधिपोनृराशिस्थः पुंराशिस्थोविलग्नपः ॥ वीक्षितः पुत्रदः प्रोक्तोयुग्मराशौचकन्यकाम् ॥
॥ १७ ॥ लग्नाद्विषमोपगतः शनैश्चरः पुत्रजन्मदोभवति ॥ जीवरविलग्नचन्द्रमसोविषमोप
गतानरंकुर्य्युः ॥ १८ ॥ गर्भिणीनामशुक्लाऽदितिथिर्मुनिभिर्युता ॥ रामैर्भागात्सुताद्वाभ्यां
सुतश्चैकेनखेनवा ॥ १९ ॥ दूतेनोक्ताहिवाणीखलुदशगुणितताराशिचक्रैर्विमिश्रा भूयोभूरेवदा
तानिकटजनयुतासप्तभागावशेषात् ॥ एके १ वह्नौ ३ शरेवाविषमपदयुतेनास्तिलाभोनराणां
शून्येवेदे ४ रसे ६ वा भवतिचनियतंकार्य्यसिद्धिस्तुराजन् ॥ २० ॥ इति श्रीलघुसंग्रहेलक्ष्मी
नारायणकृतेप्रश्नसूचनप्रकरणम् ॥ अथर्किंचित्स्वरशास्त्रोक्तमुच्यते ॥ कादिहांतान्लिखेद्वर्णान्
स्वराधाङ्कगणोज्झितान् । तिर्य्यक्पंक्तिः क्रमेणैवपंचत्रिंशत्प्रकोष्टके ॥ २१ ॥ नभस्येमार्गवैशाखे
ह्रस्वरस्योदयोभवेत् ॥ आश्विनश्रावणाषाढेइकारोनायकः स्मृतः ॥ २२ ॥ उकारश्चैत्रपौषे

स्यादेकारोज्येष्ठकार्तिके ॥ ओकारउदयंयातिमाघफाल्गुनमासयोः ॥ २३ ॥ किंचिल्लाभ
करोबालः कुमारस्त्वर्द्धलाभदः ॥ सर्वसिद्धिंयुवादत्ते वृद्धेहानिर्मृतेमृतिः ॥ २४ ॥
चन्द्रकालानलं चक्रंव्योमाकारंलिखेद्बुधः ॥ चतुर्दिक्षुत्रिशूलानिमध्ये
भिन्नानिकारयेत् ॥ २५ ॥ मध्येत्रिशूलपूर्वस्थंदिनऋक्षादिलिख्यते ॥
त्रिशूलेचबहिर्मध्येबहिस्त्रिशूलकेतथा ॥ २६ ॥ नामऋक्षंस्थितंयत्रज्ञे
यंतत्रशुभाशुभम् । त्रिशूलेचक्रबाह्येचचक्रमध्येतथैवच ॥ २७ ॥ त्रिशू
लेचभवेन्मृत्युर्मध्यमंबहिरष्टकम् । लाभः क्षेमोजयः प्रज्ञाचन्द्रगर्भेनसं
शयः ॥ २८ ॥ वर्जनीयंप्रयत्नेनप्रथमाष्टत्रिपञ्चकम् । ऋक्षंद्वाविंशकंचा
त्रकालरूपनसंशयः ॥ २९ ॥ लाभालाभंसुखंदुःखंजयंचैवप्रजायते ।
चन्द्रकालानलंचक्रंज्ञानसंशयवर्जितम् ॥ ३० ॥ रोगेचकुजनक्षत्रादि

२८ १ २
२७ ३
२६ ४
२५ ५
१९ १२
१८ ११
१७ १३
१६ १५ १४
२३—२४ २२ २१—२०
७ ६ ८ १० ९

नर्क्षाच्चात्रयुद्धके । जपतोकृत्तिकर्क्षाद्वैसूर्य्यर्क्षादन्यतोबुधैः ॥ ३१ ॥ इति चन्द्रकालानलचक्रम् ॥
उर्ध्वगास्त्रित्रिशूलाग्रास्तिस्रः तिर्य्यक्सुसंस्थिताः । द्वेद्वेन्युब्जास्थितेकोणेशृङ्गयुग्मतथेवचं
॥ ३२ ॥ मध्ये त्रिशूलदण्डाधो भानुभाद्यममण्डलम् ॥ सव्यमार्गेणदातव्यमष्टाविंश
तिसंख्यया ॥ ३३ ॥ नामऋक्षंचयत्रास्तिज्ञेयतत्रशुभाशुभम् । अधोगतैस्त्रिनक्षत्रैरुद्वेगोवधबंध
नम् ॥ ३४ ॥ ऋक्षाष्टकेजयोलाभोऋक्षपट्केतथापुनः । शृङ्गयुग्मेरुजाभंगोमृत्युः शूलत्रयेस्फुट
म् ॥ ३५ ॥ यात्रायुद्धविवाहेषुरागार्तेव्यसनेतथा । सूर्य्यकालानलंचक्रंज्ञातव्यन्तुप्रयत्नतः॥३६॥
इतिसूर्य्यकालानलचक्रम् ॥ आर्द्रादिकंलिखेच्चक्रंमृगान्तंचात्रिनाडिकम् । भुजङ्गसदृशाकारंम
ध्येमूलंप्रतिष्ठितम् ॥ ३७ ॥ रवीन्दुनामनक्षत्रमेकनाड्यांयदाभवेत् । तदामृत्युर्नसन्देहोरोगा
द्वापिरणेथवा ॥ ३८ ॥ इतित्रिनाडीचक्रम ॥ मुखेदक्षेपाणौचरणयुगलेवक्षसिकरेशिरोभागेनेत्र
द्वितययुदकेनामभमतः ॥ लिखेदेकं १ वेदा ४ रस ६ शर ५ चतु ४ त्रि ३ द्वि २ युग २ लरं

| | | |
|---|---|---|
| हानि | १ | मुखे |
| पूजा | ४ | दक्षण |
| श्रम॰ | ६ | चरणयो |
| धनम् | ५ | हृदये |
| भय | ७ | करयो |
| भूपाल | ३ | शीर्षे |
| सुखम् | २ | नेत्रे |
| मृत्यु॰ | २ | गुदे |

णोहानिः पूजाश्रमधनभयंभूसुखमृतिः ॥ ३९ ॥ जन्माष्टकद्वादशतुर्यगोपि
हृच्छीर्षसव्येतरबाहुनेत्रे । तदासुखंविघ्नकरस्त्रिषष्ठो लाभेपुवक्त्रांघ्रिभुजेगुदस्थे
॥ ४० २ क्रूराग्रभेपुरंघ्नन्तिप्राकारेखंडकारकाः । चतुस्थावेष्टकसैन्यभयदानात्र
संशयः॥४१॥ क्रूराग्रभेशुभाबाह्येनिश्चितंगृह्यतेपुरम् । सौम्यामध्येबहिः क्रूराश्चसा
ध्यंदुर्गमुच्यते ॥ ४२ ॥ अथकोटपालकविधिः । शुक्रः सौम्योगुरुर्मन्दराहुबे
भानुजःसितः । बुधेन्दुभास्करोसौरिःसौम्येतिमाधवामताः ॥ ४३॥ रविर्भौमः सि
तः सौम्योगुरुः सौरिः शशीतमः । वर्गेशाश्चकवर्गादौकोटपालाः प्रकीर्तिताः॥
कोटाधिपः कोटमध्येकोटपालोबहिस्स्थितः । तदाकोटभयंनास्तिविपरीतास्तुहा
निदाः ॥ ४४ ॥ बाह्यशत्रुप्रवेशर्क्षेसंग्रामंयदिकारयेत् । तदासिध्यतितद्दुर्गंनान्यथास्त्रभाषित
म् ॥ ४५ ॥ पुरभेनिर्गमेवक्राकथंचित्क्रूरखेचराः । दुर्गमुक्त्वातदाकालेदुर्गस्थोनपलायते ॥

॥ ४६ ॥ क्रूरेषुस्तंभसंस्थेषुवाक्रितेषुपलायते । विहायदुर्गदुर्गेशाः मन्देहोनात्रकारयेत् ॥ ४७ ॥
दुर्गनाम्नः स्वरोयस्य बालोवास्तामितोपिवा ॥ तद्दिनेप्रारभेयुद्धंदुर्ग्गः सिध्यतिनान्यथा ॥ १ ॥
पुरनक्षत्रादीशानकोणतोलिखेत् । गणनापिकार्य्या इति कोटचक्रम् । लिखेत्पूर्व्वतोवामतश्चैत्रमुख्या




श्चतुर्दिक्षुमव्येनयामानथाष्टौ । दिगष्टभ्रमान्मासतः सव्यतश्चपृष्ठेऽथद
क्षेशुभोक्षेत्रपाली ॥ ४८ ॥ इतिक्षेत्रपालभूमिः । दैवज्ञचिन्तमणौ ॥
इन्द्रप्राणयमेश्वरिहुतभुक्सौम्यासुरेषुक्रमात् यामार्द्धेदिवसेत्रया
तिजयतोदक्षेथपृष्टेतमः ॥ ४९ ॥ रात्रौपश्चिमवन्हिसौम्यनिऋति
प्रागवातसोमेशक त्वीशानेघटिकाद्धयंपुनरसौतुर्य्येचतुर्थ्येदिशि ॥५०॥
इत्यर्द्धयामः ॥ प्राचीकुवेरशिखिराक्षसधर्मराजतोयाधिपानिलमहेश
दिशिक्रमेण । यामार्द्धकैः प्रातपदादितिथौमहेशीदक्षस्थिताशुभकरी

खलुपृष्टभागे ॥ ५१ ॥ इति श्रीलघुसेग्रंहलक्ष्मीनारयणाकृतेचक्रप्रकरणं समाप्तम् ॥ चतुराशिचतुः
कोणनराकारंलिखेद्बुधः । रविभाज्जन्मभंलेख्यमीशानादौचसव्यतः ॥ ५२ ॥ शत्रुशीर्षेपलाय
तेशत्रुकर्णौ त्रजाग्रतः ॥ दक्षिणेहस्तपादेचशत्रुः सन्नोपसर्पति । वामपादेचहस्तेचनिश्चितंधा
र्यतेरिपुः ॥ ५३ ॥ दुर्गनक्षत्रमारभ्यसूर्यो भवतिपंचमः ॥ अथवाद्वादशेत्रृक्षे तथाप्येकोनविं
शतिः ॥ ५४ ॥ षड्विंशेचाथनक्षत्रेपुरभंगोविनिर्दिशेत् ॥ धनहारविवेधः स्यात्बलहाकेतुभो-
मयोः ॥ ५५ ॥ पुरहाशनिवेधः स्यत्राहुश्चन्द्रस्तथास्त्रियाः ॥ सप्तदशगः पुरक्षोद्यदिचेतिदिवा
करः ॥ ५६ ॥ पुरस्यपुरनाथस्य नवमेभास्करेपिच ॥ धनहाबलहाचैवपुरहापुरपहास्त्रिहा ॥
॥ ५७ ॥ अश्विन्यादिलिखच्चक्रंसप्तविंशतितारकम् । त्रिकोणंनवभिर्लब्धंकर्तव्यातिर्य्यगाकृति ॥
॥ ५८ ॥ अश्विनीरेवतीवेधोवेधश्जाश्विनिज्येष्ठयोः । मघापोषेमघाश्लेषामूलयोस्तथा
॥ ५९ ॥ एवंसंघट्टचक्रेणकार्य्यात्रृक्षगताग्रहाः ॥ भूपनामर्क्षसंघट्टेयुद्धेभवतिनान्यथा ॥ ६० ॥

निर्वेधेसौम्यवेधेचयुद्धंनास्तिनरेंद्रयोः ॥ क्रूरवेधेभवेद्युद्धंतत्कालेघोररूपिणां ॥ ६१ ॥ युद्धकांक्षी भवेद्राजापुष्पभंक्रूरवोधितम् ॥ युद्धद्वेषीभवत्सौम्यस्तथावेधविवर्ज्जिते ॥ ६२ ॥ सौम्यक्रूरविभागेनमित्रामित्रक्रमेणात्र । वक्रातिचारगत्याचयुद्धंस्वल्पंचनास्तित्र ॥ ६३ ॥ इतिसंघटचक्रम् ॥

प्रद्योतनात्पञ्चनगाङ्गसूर्य्यनेवन्दुषडविंशमितानिभानि ॥ शेतेमहीनेवगृहंविधेयंतडागवापीखननंनशस्तम् ॥ ६४ ॥ अन्धकंतदनुमन्दलोचनम्मध्यलोचनमतः सुलोचनम् ॥ रोहिणीप्रभृतिभंचतुर्विधंनुनमत्रगणयेत्पुनः पुनः ॥ ६५ ॥ विनष्टार्थस्यालाभोधेशीघ्रं मन्देप्रयत्नतः ॥ स्याद्दूरेश्रवणांमध्येश्रुत्यासीनसुलोचने ॥ ६६ ॥ इति लघुसंग्रहः समाप्तः ॥

## पता—मैनेजर भार्गव पुस्तकालय—चौक बनारस सिटी ।

मैनेजर पं० आत्माराम शर्म्मा द्वारा जार्ज प्रिंटिंग वर्क्स कालभैरो बनारस में छपा ।

# ॥ सूचीपत्र ॥

॥ ❀ ॥ इति लघुसंग्रहः समाप्तः ॥ ❀ ॥